# Central Sanskrit University

(Accredited by NAAC with grade A++)

## Guruvayoor Campus

Puranattukara, Thrissur, Kerala - 680551








निबन्धमाला 2022-23 केन्द्रीयसंस्कृतविश्वविद्यालयः - गुरुवायूर्-परिसरः



UGC Care Listed Journal ISSN:- 2277-2359

# निबन्धमाला

परिसरस्य वार्षिकशोधपत्रिका













प्रधानसम्पादकः

आचार्यः ललितकुमारसाहुः, निदेशकः

सम्पादकः

आचार्यः का. इ. मधुसूदनः

सहसम्पादकः

डा. के. विश्वनाथन्


## केन्द्रीयसंस्कृतविश्वविद्यालयः

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A++ श्रेण्या प्रत्यायितः)

## गुरुवायूर्-परिसरः

पुरनाट्टुकरा, तृश्शूर्, केरलम् - 680551

त्रयोदशं पुष्पम् वर्षम् - 2022-23

UGC CARE LISTED JOURNAL ISSN: 2277 - 2359

# NIBANDHAMALA

ANNUAL RESEARCH JOURNAL OF THE CAMPUS

CHIEF EDITOR

PROF. LALITA KUMAR SAHOO, DIRECTOR

EDITOR

PROF. K. E. MADHUSUDANAN

CO-EDITOR

DR. K. VISWANATHAN

## CENTRAL SANSKRIT UNIVERSITY

(ACCREDITED BY NAAC WITH GRADE A++)

## GURUVAYOOR CAMPUS

PURANATTUKARA, THRISSUR, KERALA 680551

13TH EDITION YEAR OF 2022-23

प्रो. श्रीनिवास वरखेड़ी
कुलपति
केन्द्रीय संस्कृत विश्वविद्यालय
संसद के अधिनियम द्वारा स्थापित
(पूर्व में राष्ट्रिय संस्कृत संस्थान,
शिक्षा मन्त्रालय, भारत सरकार के अधीन)



Prof. Shrinivasa Varakhedi
Vice-Chancellor
Central Sanskrit University
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan,
Under Ministry of Education, Govt. of India)

के.सं.वि./कुलपतिः-101/2023-24/139

दिनाङ्कः - 19.05.2023

आज़ादी का अमृत महोत्सव

## कुलपतिसन्देशः

अथ **"स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्" "स्वाध्यायप्रवचने एवेति नाकः मौद्गल्यः" "तद्धि तपस्तद्धि तपः"** इत्यादीनि उपनिषद्वचनानि अस्मान् अनूचानपरम्परायाः अनुसरणाय संरक्षणाय च अनुदिनम् अभिप्रेरयन्ति। पुनः अनूचानानां भारतीयानां चिन्तनसरणेः मूलं तु भारतीया आर्षवाङ्मयमाला एवेति निश्चप्रचम्। सुगन्धरसनिबद्धायाः अस्याः सुगन्धः सर्वत्र प्रसरेत्, सर्वोऽपि रसास्वादं कुर्यात् इत्युद्देश्येन केन्द्रीयसंस्कृतविश्वविद्यालयः वाग्देव्याः समाराधनपराणि कार्याणि सर्वदा प्रोत्साहयति।

अधुना केन्द्रीयसंस्कृतविश्वविद्यालयान्तर्गतेन गुरुवायूर् - परिसरेण निबन्धमाला यथापूर्वं ऐषमोऽपि प्रकाश्यते इति हर्षस्य विषयः। वाग्देव्याः कण्ठमालोपमायाम् अस्यां निबन्धमालायां पदवाक्यप्रमाणादीनां विविधशास्त्राणां निबन्धविशेषाः सूत्रे मणिगणा इव निवेशिताः सन्ति। अस्याः निबन्धमालायाः सम्पादनप्रकाशनादिषु अहर्निशं कार्यं कृतवन्तं सनिदेशकं सम्पादकमण्डलं सानन्दं स्तौमि। परिसरपरिवारस्य एषः प्रयासः शैक्षिकगुणोत्कर्षाय कल्पते इत्यतः वाग्देव्याः वैभवं पुनरपि श्लोकमुखेन संस्मरामि -

**यावदस्ति त्रयी लोके चतुर्मुखमुखोद्भवा।**
**यावद्वा रामचरितं वाल्मीकिकविचित्रितम् ॥**

**क्षरन्त्यमृतधारा वा यावद्व्यासस्य सूक्तयः।**
**वाग्देव्याःवरपुत्रस्य कालिदासस्य वा गिरः ॥**

**यावदेषा देवभाषा देवी स्थास्यति भूतले ।**
**यावच्च वंशोऽस्त्यार्याणां तावदेषा ध्रुवं ध्रुवा ॥**

(आचार्यः श्रीनिवासवरखेडी)
कुलपतिः

56-57, सांस्थानिक क्षेत्र, जनकपुरी, नई दिल्ली - 110058
56-57, Institutional Area, Janakpuri, New Delhi - 110058 (INDIA)
**Ph. No.: (O)** 011-28523949, **EPABX** : 28524993, 28521994, 28524995
**EMAIL** : vicechancellorcsu@gmail.com / vc@csu.co.in, **WEBSITE** : www.sanskrit.nic.in

केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः
गुरुवायूर्-परिसरः
पुरनाट्टुक्करा, तृश्शूर्, केरलम् - 680551




**Central Sanskrit University**
**Established by an Act of Parliment**
(Formerly Rashtriya Sanskrit Sansthan, Deemed University)
Under Ministry of Education
Govt. Of India
**Guruvayoor Campus**
Puranattukkara, Thrissur, Kerala - 680551

**Ph: 0487 – 2307208(Office)| 2307608(Director)| Mob: 9446037208(Director)**
**E-mail: rssguruvayoor@gmail.com| Website: www.csu-guruvayoor.edu.in**

## पुरोवाक्

केन्द्रीयसंस्कृतविश्वविद्यालयस्य द्वादशपरिसरेषु गुरुवायूर्-परिसरोऽयम् अन्यतमः, येन परिसरेण प्रतिवर्षमिव ऐषमोऽपि निबन्धमालाख्या वार्षिकशोधपत्रिका प्रकाश्यत इति मे मन उल्लसितमस्ति। बहुवर्णैः रचिता माला यथा मनोहारिणी हृदयाह्लादिनी च भूत्वा भगवतः शोभां वर्धयति तथैव विभिन्नाभिः भाषाभिः विभिन्नैः विषयैश्च सुशोभितेयं निबन्धमाला विदुषां पाठकानां शिक्षकाणां छात्राणां च कृते उपकारिकी भवति। अत्र प्रकाशिताः लेखाः चयनसमित्या चिता एव, येन पत्रिकेयं UGC – CARE LISTED JOURNAL मध्ये स्थानिता विद्यते।

शोधपत्रिकायामस्यां येषामप्रतिमलेखकानां लेखाः सङ्कलिताः ते मुख्यतया युवानः सन्ति, य एवास्माकम् उज्ज्वलभविष्यतः सूचकाः। श्रीअरविन्देन युगमिदं Hour of God इति कथितम्, अर्थाद्युगमिदं दिव्यताया अवतरणस्य युगम्। युवप्रतिभागिनामालेखाः युगस्यास्य आनयनं कुर्वन्ति। प्रकाश्यमानायां पत्रिकायां सर्वविधसौविध्यं युवप्राध्यापकेभ्यः प्रदत्तम्।

शोधपत्रिकायाम् अध्यात्मतत्त्वेन चतुर्दशविद्यासंवलितलेखानां प्रकाशनम् अवलोकितम्। किञ्च लेखासु प्रबन्धेषु च प्राचीन-मध्याधुनिकमहर्षिकल्पानां वचनानि उदाहृतानि, यानि पाठकानां मनत्सु आनन्दं जनयेयुः। यत्र चापि लेखेषु

सामाजिक-राजनैतिक-आर्थिकसम्बन्धः परिलक्ष्यते। अतो ग्रन्थोऽयं संस्कृतपाठकानाम् उपकाराय कल्पत इत्यत्र नास्ति सन्देहलेशः।

अस्याः निबन्धमालायाः सम्पादकः आचार्यः का.ई.मधुसूदनवर्यः, यस्य दर्शने मीमांसायां अन्यशास्त्रेषु चापि सुमहान् परिश्रमः कृतो विद्यते। यस्य सर्वविधोन्नतिकामनया साकं जगतो नाथस्य जगन्नाथस्य भगवतः श्रीकृष्णस्य च चरणकमलेषु भक्तिकुसुमाञ्जलिः समर्प्यते।

ल. कु. साहुः

प्रो.ललितकुमारसाहुः
परिसरनिदेशकः
प्रधानसम्पादकः
निबन्धमाला 2022-23

 ISSN: 2277 - 2359

## सम्पादकीयम्

समोदमिदं निवेद्यते यत् ऐषमः निबन्धमालानाम्न्याः यू.जी.सी कैर् सूच्यन्तर्गतायाः वार्षिकपत्रिकायाः त्रयोदशं पुष्पं केन्द्रीयसंस्कृतविश्वविद्यालयस्य गुरुवायूर्-परिसरेण प्राकाश्यं नीयते। पत्रिकैषा भारतीयासु विविधासु ज्ञानशाखासु कृतभूरिपरिश्रमाणां विदुषां शोधकर्मरतानां छात्राणां च स्वाशयविनिमयाय भारतीयवाङ्मयस्य बहुजनसम्बन्धसम्पादनाय च कश्चनावसरो भूयादित्युद्देशेनारम्भि। संस्कृतम्, आङ्ग्लम्, हिन्दी इति तिसृषु भाषासु चत्वारिंशदधिकाःशोधलेखाः समीक्षापूर्वकं न्यवेशिषत। शोधलेखप्रस्तोतृन् अभिनन्द्य तेभ्योऽहं धन्यतामाविष्करोमि।

निबन्धमालायां शुभसन्देशं प्रेष्य, मुद्रणोचितद्रविणसाहाय्यम् उपकल्प्य चान्वग्रहीषुः केन्द्रीयसंस्कृतविश्वविद्यालयस्य विततयशसः कुलपतयः आचार्याः श्रीनिवासवरखेडी महोदयाः। तेभ्यः प्रणामपूर्वकं कार्तज्ञ्यं प्रकटयामि। एवं मुख्यालयस्थितेन प्रकाशनविभागेन मार्गनिर्देशनमकारीति तत्रत्याधिकारिभ्यः कृतज्ञतामावेदयामि। प्रधानसम्पादकरूपेण पदे पदे उपयुक्तोपदेशेन परिसरस्य निदेशकाः आचार्याः ललितकुमारसाहुमहोदयाः उपाकर्षुः। तेभ्यः कृतवेदिता आवेद्यते। सम्पादनकर्मणि सुबहुप्रयस्य ग्रन्थस्यास्य प्रकाशने साह्यमाचरन् सर्वेऽपि सम्पादकमण्डलसदस्याः। तेभ्यः सर्वेभ्यः, विशेषतःसहसम्पादकेभ्यः साहित्यविभागप्राध्यापकेभ्यः डा.विश्वनाथन् महोदयेभ्यः टङ्कणकर्मचारुनिर्वर्तितवतोः डा.कीर्तिसुधा - डा.गणेशकृष्णभट्टमहोदययोश्च आधमर्ण्यं प्रकटयामि। तथा भावना - मुद्रणालयाधिकारिभ्यः साधुवादान्वितनोमि।

का.इ.मधुसूदनः

प्रो.का.इ.मधुसूदनः

सम्पादकः

निबन्धमाला 2022-2023

ISSN: 2277 - 2359

# विषयसूची/INDEX

 ISSN: 2277 - 2359

 ISSN : 2277-2359

# प्राचीनभारते कृषिविज्ञानम्- व्याकरणमहाभाष्यात् लभ्यमानाः सूचनाः

**डा. राजीवः पि. पि**

सह-आचार्यः, व्याकरणविभागः,

सर्वकारीयसंस्कृतविद्यालयः, त्रिपुणित्तुरा

**कुञ्चिकापदानि**

पतञ्जलिः, व्याकरणमहाभाष्यम्, कृषकाः, कृषिकर्माणि, कर्षयानम्, हलः, कुद्दालः, कुसूलः, क्षेत्रसंरक्षणम्, धान्यस्य मूल्यम्, गवादीनां परिपालनम्, अश्वघासः, हस्तिविद्या॥

**शोधसारः**

प्राचीनमानवस्य पुरोगतिः मुख्यतया कृषिमाश्रित्य आसीत्। 'ये कृषिकर्माणि कुर्वन्ति ते कृषकाः' इति सामान्यतया वक्तुं शक्यते। षोडशविधाः कृषीः अधिकृत्य अथर्ववेदे चर्चा वर्तते। लाङ्गलं, सीरः, दात्रम्, सृणिः इत्यादि कार्षिकोपकरणानि अधिकृत्य, तण्डुलः, व्रीहिः, शालिः, यवः इत्यादि धान्यनामानि च वेदकालसाहित्यादुपलभ्यन्ते। एवं बृहत्संहितायाम्, अर्थशास्त्रे, पुराणादिष्वपि कृषिसम्बद्धाः बहवो विचाराः वर्तन्ते। पतञ्जलिकाले जनाः हलैः कुद्दालैश्च क्षेत्रस्य कर्षणं कृतवन्तः। तस्मिन् काले शाल्यर्थं कुल्यानां बहुप्रचारः आसीत्। एवं कृषकाः क्षेत्रस्य योग्यं धान्यं किमिति ज्ञात्वा तत्र शालिः, यवः, व्रीहिः, तिलः इत्यादि धान्यानामुत्पादनं कृतवन्तः। इदानीं कृषकैः क्षेत्राणां सीम्नि पाषाणानि स्तापयित्वा मर्यादाकरणविधिः क्रियते। पतञ्जलिकाले क्षेत्राणां सीमाविषये राजा एव प्रमाणं भवति। "तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रभाष्ये पतञ्जलिः 'धान्येन धनवान्' इत्युदाहरणं प्रदर्शयति। एतस्मात् तस्मिन् काले न केवलं धनेनैव धनी भवति किन्तु धान्येन च धनी भवतीति ज्ञातुं शक्यते। पतञ्जलिकाले समाजे सर्वत्र कृषेः मुख्यस्थानमासीत्। एवं व्याकरणमहाभाष्यस्य सूक्ष्मपर्यवेक्षणेन दृष्टिपथमवतरति मतिमतां, यत् पतञ्जलिः न केवलं शब्दशास्त्रज्ञ एव, अपि तु समस्तेऽपि प्राचीनविज्ञाने अप्रतिहतमतिरासीत् इति।

**उपक्रमः**

प्राचीनमानवस्य पुरोगतिः मुख्यतया कृषिमाश्रित्य आसीत्। वेदकालसाहित्येषु कृषिकर्माण्यधिकृत्य बहवः सूचनाः वर्तन्ते। चतुर्षु वेदेषु ऋग्वेदे अथर्ववेदे च कृषिसम्बद्धाः बहवो मन्त्राः सन्ति। तद्यथा-

"क्षेत्रस्य पतिना वयं हितेनेव जयामसि।
गामश्वं पोषयिन्त्वा स नो मृळातीदृशो॥
शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम्।
शुनं वरत्रा बध्यन्तां शुनमष्टामुदिङ्गया"॥[1]

इति॥ एवम् अथर्ववेदेऽपि – "युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजम्"[2] इत्यादि कृषिसम्बद्धाः मन्त्राः सन्ति। विनैतत् षोडशविधाः कृषीः अधिकृत्य अथर्ववेदे चर्चा वर्तते[3]। लाङ्गलं, सीरः, दात्रम्, सृणिः इत्यादि कार्षिकोपकरणानि अधिकृत्य तण्डुलः, व्रीहिः, शालिः, यवः इत्यादि धान्यनामानि च वेदकालसाहित्यादुपलभ्यन्ते। एवं बृहत्संहितायाम्, अर्थशास्त्रे, पुराणादिष्वपि कृषिसम्बद्धाः बहवो विचाराः वर्तन्ते। अत्र पतञ्जलिकाले जनानां कृषिविषये कीदृशं ज्ञानमासीदिति व्याकरणमहाभाष्यात् लभ्यमानसूचनाभिः पर्यालोचना क्रियते॥

**कृषकाः**

'ये कृषिकर्माणि कुर्वन्ति ते कृषकाः' इति सामान्यतया वक्तुं शक्यते। विषयमिममधिकृत्य "हेतुमति च" इति सूत्रभाष्ये पतञ्जलिनोच्यते- 'कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात्। नानाक्रियाः कृषेरर्थाः। नावश्यं कृषतिर्विलेखने एव वर्तते। किं तर्हि? प्रतिविधानेऽपि वर्तते। यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः'[4] इति। एतस्मात् नानाक्रियाः कृषेरर्थाः इति सिध्यति। अतः यत्र स्वयं कृषति तत्र देवदत्तः कृषति, यत्र देवदत्तस्य भृत्याः कृषन्ति तत्रापि देवदत्त एव कृषति, यत्र च देवदत्तस्यांशभागिनः कृषन्ति तत्रापि देवदत्तस्य प्रतिविधानकर्तृत्वात् देवदत्तः कृषतीति भवत्येव। अत्र क्वचित् देवदत्तः भक्तेन प्रतिविधानं करोति, क्वचिच्च बीजदानेन, क्वचित्

 ISSN : 2277-2359

हलबलीवर्दादिभिः। एवं यः स्वयं कृषति, यो भृत्यद्वारा कृषति, यो भागदानेन कृषति, यश्च बीजबलीवर्दादिसम्पादनेन कृषति ते सर्वेऽपि कृषकाः भवन्ति॥

**कृषिकर्माणि**

पतञ्जलिकाले क्षेत्रस्य कर्षणार्थं कर्षयानादीनि (Tractor) आधुनिकानि कार्षिकोपकरणानि नासन्। अत एव तस्मिन् काले जनाः हलैः (Ploughs)कुद्दालैः (Spades)च क्षेत्रस्य कर्षणं कृतवन्तः। 'एकहलं क्षेत्रम्, एकहलं कुद्दालम्' इत्यादि-व्यवहाराः तस्मिन् काले कृषकाणां सामान्यव्यवहारेषु आसन्। एकेन हलेन एकस्मिन् दिने यावत्क्षेत्रं क्रष्टुं शक्यं तावत्क्षेत्रम् एकहलं क्षेत्रमित्युच्यते। तद्वत् एकेन कुद्दालेन एकस्मिन् दिने क्रष्टुं शक्यं क्षेत्रम् एककुद्दालं क्षेत्रमित्युच्यते। अत्र इदमवधेयमस्माभिः – एकहलं क्षेत्रम् इदानीन्तनकाले एकर् (Acre)इत्याख्यातात् किञ्चिदेव न्यूनं वर्तते। हलेन कर्षणसमये द्वौ वृषभौ एकः हलवाहः च इत्येते आवश्यका भवन्ति। अतः एकेन हलेन यावत्क्षेत्रं क्रष्टुं शक्यं तस्य तृतीयो भाग (1/3) एकेन हलवाहेनापि कुद्दालेन क्रष्टुं शक्यो भवति। एतस्मात् इदानीम् 'एकर्' इत्याख्यस्य तृतीयो भागो भवति कुद्दालपरिमितं क्षेत्रम् इति ज्ञातुं शक्यते। यत्र हलेन कर्षणं न सम्भवति तत्र कुद्दालेन कर्षणं कर्तुं शक्यते॥

सर्वे कृषकाः कुसूलैः क्षेत्रस्य संरक्षणं कुर्वन्ति। अर्धभित्तिसदृशाः मृत्तिकाभिः पाषाणैः वा कृषकैः कुसूलाः निर्मीयन्ते। कृषेः सौकर्यार्थं जलस्योपयोगाय एतादृशाः कुसूलाः बहूपकारकाः सन्ति। तद्यथा- यदा क्षेत्रे अधिकजलसंचयो जायते, जलं च शालीनां नावश्यकं तदा एकया नलिकया क्षेत्राज्जलं निष्कास्यते। तद्वत् क्षेत्रे जलं नास्ति चेत् कुल्यया वा मार्गान्तरेण वा जलं नलिकया क्षेत्रे स्थापयितुं च शक्यते। कुसूलः नास्ति चेत् एवं कर्तुं न शक्यते। एते विषयाः "कर्मवत्कर्मणा तुल्यक्रियः"[5] इति सूत्रभाष्ये पतञ्जलिना वर्ण्यते॥

"मीनादिमिनोतिदीङांल्यपि च" इति सूत्रभाष्ये पतञ्जलिनोच्यते- 'शाल्यर्थं कुल्याः प्रणीयन्ते। ताभ्यश्च पानीयं पीयत उपस्पृश्यते च शालयश्च भाव्यन्ते'[6] इति। एतस्मात् तस्मिन् काले शाल्यर्थं कुल्यानां बहुप्रचारः आसीत् इति सिध्यति। एवं च न केवलं वर्षास्वेव

 ISSN : 2277-2359

शालीनुत्पादयन्ति किन्तु अवर्षे हेमन्तादावपि शालीनुत्पादयन्ति स्मेति च कुल्यानां निर्माणात् ज्ञातुं शक्यते। “वर्णो वर्णेन” इति सूत्रभाष्ये पतञ्जलिः ‘लोहितशालिमान् ग्रामः’[7]इत्युदाहरणं प्रदर्शयन्ति। एतस्मात् तस्मिन् काले शालीनां प्रकाराः भिन्नाः, तत्तद्देशविशिष्टाः च आसन्निति सिद्ध्यति। यथा लोहितवर्णानां शालीनां सम्बन्धेन लोहितशालिमान् ग्रामः इति व्यवहारः, तथा सर्वाणि बीजानि एकस्मिन् ग्रामे उत्पादयितुं शक्यन्ते इत्यर्थे ‘सर्वबीजीग्रामः’[8] इति व्यवहारोऽपि तस्मिन् काले जनानां मध्ये आसीत्॥

पतञ्जलिकाले कृषकाः प्रमुखतया कानि कानि धान्यानि उत्पादयन्ति स्मेति विषये महाभाष्ये सुस्पष्टरूपेण उदाहरणानि न सन्ति। मध्ये मध्ये एकैकस्य धान्यस्य नाम उल्लिख्यते इत्येव। किन्तु अर्थशास्त्रे एकत्र कौटिल्येनोच्यते - “शालीव्रीहिकोद्रवतिलप्रियङ्गु-दारकवरकाः पूर्वावापाः। मुद्गमाषशैम्ब्या मध्यवापाः। कुसुम्भमसूरकुलत्थयवगोधूमकला-यातसीसर्षपाः पश्चाद्वापाः”[9]इति। एतानि धान्यानि पतञ्जलिकालेऽपि उत्पाद्यन्ते स्मेति विचारे दोषो नास्ति। एवं तस्मिन् काले यथा गुणभेदेन अनेकप्रकाराणि धान्यानि आसन् तथा गुणविशिष्टानि क्षेत्राण्यपि। अत्र प्रमाणं “कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः” इति सूत्रभाष्यं भवति। तत्र “सम्पद्यन्ते यवाः, सम्पद्यन्ते शालया इति। सम्पद्यन्तेऽस्मिन् क्षेत्रे शालय इति”[10] इत्युदाहरणं पतञ्जलिना प्रदर्शितम्। एतस्मात् अस्मिन् क्षेत्रे शालयो भविष्यन्ति, अस्मिंश्च यवा भविष्यन्ति, अस्मिन् क्षेत्रे यवापेक्षया समीचीनाः शालयः भविष्यन्ति इत्यनेन रूपेण क्षेत्राण्यधिकृत्य विशिष्टज्ञानं तेषामासीदिति सिद्ध्यति। अत एव तस्मिन् काले कृषकाः क्षेत्रस्य योग्यं धान्यं किमिति ज्ञात्वा तत्र शालिः, यवः, व्रीहिः, तिलः इत्यादि धान्यानामुत्पादनं कृतवन्तः इति ज्ञातुं शक्यते॥

**क्षेत्रसंरक्षणम्**

एकस्मिन् भूप्रदेशे अपि बहूनां जनानां क्षेत्राणि भवितुमर्हन्ति। तस्मिन्नवसरे एकैकस्य क्षेत्रस्य प्रत्येकं स्वामिसम्बन्धोऽपि भविष्यति। यथा ‘अस्मात् प्रदेशादारभ्य एतत् प्रदेशपर्यन्तं देवदत्तस्य क्षेत्रम्’ इत्यादि मर्यादां विहाय परिधिः निश्चेतुं न शक्यते। “मपर्यन्तस्य” इति सूत्रभाष्ये विषयमेतं स्पष्टीकरोति पतञ्जलिः। यथा –‘अयमन्तशब्दो

अस्त्येव सह तेन वर्तते। तद्यथा मर्यादान्तं देदत्तस्य क्षेत्रम्, सह मर्यादयेति गम्यते। अस्ति प्राक् तस्माद्वर्तते। तद्यथा- नद्यन्तं देवदत्तस्य क्षेत्रमिति। प्राक् नद्या इति गम्यते। तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत। नैतदस्ति प्रयोजनम्। सर्वत्रैवान्तशब्दः सह तेन वर्तते। अथ कथं नद्यन्तं देवदत्तस्य क्षेत्रमिति। नद्याः क्षेत्रत्वे सम्भवो नास्तीति कृत्वा प्राक् नद्या इति गम्यते'[11] इति। एवं "मपर्यन्तस्य" इति सूत्रे पर्यन्तशब्दः किमर्थः? मान्तस्येत्येव वक्तव्यमित्याक्षिप्य अन्तशब्दस्य व्यभिचारदर्शनात्परग्रहणं कृतम्। अन्तशब्दस्य व्यभिचाराच्च मर्यादान्तं देवदत्तस्य क्षेत्रमित्युच्यमाने मर्यादा अपि क्षेत्रावयव इत्येव प्रतीयते, न तु मर्यादां विहाय क्षेत्रमित्यर्थः। किन्तु नद्यन्तं क्षेत्रमित्युच्यमाने च नदीं विहाय क्षेत्रम् इत्येवार्थः सिध्यति॥

इदानीं कृषकैः क्षेत्राणां सीम्नि पाषाणानि स्तापयित्वा मर्यादाकरणविधिः क्रियते। एकस्य क्षेत्रम् अन्यस्य क्षेत्रेभ्यः पृथग्ज्ञानार्थम् एतादृशमर्यादाकरणविधिः आवश्यक एव। किन्तु पतञ्जलिकाले 'इदं देवदत्तस्य क्षेत्रम्, इदं यज्ञदत्तस्य' इत्यर्थे प्रमाणं राज्याधिकारिभिः स्थापितमेव भवेत्। अत एव तस्मिन् काले क्षेत्राणां सीमाविषये राजा एव प्रमाणं भवति।

**धान्यस्य मूल्यम्**

"तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रभाष्ये पतञ्जलिः 'धान्येन धनवान्'[12] इत्युदाहरणं प्रदर्शयति। एतस्मात् तस्मिन् काले न केवलं धनेनैव धनी भवति किन्तु धान्येन च धनी भवतीति ज्ञातुं शक्यते। एवं 'धान्येन धनवानिति' वाक्यात् यस्य हस्ते यावत् धनमस्ति सः तावत् धनवान् भवतीति अर्थः सिध्यति। तद्वत् कृषिभूमेः विस्तृतिमनुसृत्य, गवादीनां संख्यामनुसृत्य च धनित्वव्यवहारः इदानीमपि भारतस्य केषुचित् ग्रामेषु भवति। एवं तस्मिन् काले धनित्वव्यवहारः धान्येन भवति चेदपि धान्यस्य किमपि मूल्यमपि निश्चितं स्यात्। पतञ्जलिः महाभाष्ये 'अध्यर्धशूर्पम् अर्धपञ्चमशूर्पम्'[13] इत्याद्युदाहरणानि प्रदर्शयन्ति। एतस्मादुदाहरणात् तस्मिन् काले ग्रामीणानां प्रत्यहम् अधिकतया विनिमयः धान्येनैव आसीत् इति सिध्यति। एवं तस्मिन् काले विद्यमान नियमानुसारेण सर्वैः जनैः स्वस्य धनस्य षष्ठांशं निकुतिरूपेण (Tax)राज्ञे दातव्यमासीत्। अयं विषयः "चतुर्थीतदर्थार्थबलि-

 ISSN : 2277-2359

हितसुखरक्षितैः" इति सूत्रभाष्ये –'महाराजाय बलिः स महाराजार्थो भवति'[14] इति पतञ्जलिवचनात् ज्ञातुं शक्यते। एतस्मादुदाहरणाद्यो राजग्राह्यो भागः सोऽपि धान्यरूपेणैव दत्तवन्तः, न तु द्रव्यरूपेणेति सिध्यति॥

"कर्तरि कर्मव्यतिहारे" इति सूत्रे भाष्ये पतञ्जलिनोच्यते 'कर्मव्यतिहार इत्युच्यमाने इहापि प्रसज्येत - देवदत्तस्य धान्यं व्यतुलुनन्तीति। इह च न स्यात्। व्यतिलुनते व्यतिपुनते'[15]इति। अत्र देवदत्तस्वामिकं धान्यं लवनेन स्वीकुर्वन्तीत्यर्थः। पतञ्जलिः अनेन उदाहरणेन तस्मिन् काले कृषकाणां कार्यं मूल्येन क्रियाव्यतिहारेण च समर्थयति। एवं तस्मिन् काले न सामुदायिकी कृषिःआसीत्, न वा एकमात्रकर्तृका कृषिरिति च वाक्यादस्मात् ज्ञातुं शक्यते। देवदत्तस्य धान्यं लवनात् प्राक् क्षेत्रे एव व्यवस्थितं भवति। यः कोऽपि आगत्य तद्धान्यं क्रीणाति। तत्र कर्मणो धान्यस्य व्यवहारात् देवदत्तस्य धान्यं व्यतिलुनन्तीत्यर्थसिद्धिः भवति। एतादृशक्रियाव्यवहारेण तस्मिन् काले कृषेः सर्वं कार्यं द्रव्याभावेऽपि सिध्यति स्मेति ज्ञातुं शक्यते॥

एवं 'देवदत्तस्य धान्यं व्यवतिलुनन्तीति' वाक्यात् पतञ्जलिकाले अन्योद्योगापेक्षया कृषेः उन्नतं स्थानमासीदिति च सिध्यति। कथमिति चेत् यस्य परिमितधान्यमस्ति सः स्वयमेव धान्यं लूत्वा, पूत्वा, आपणे च नीत्वा विक्रयणं करोति। किन्तु बहुधान्यवतां धनिकानां तु लवनादिव्यवहारः बहुकष्टः अस्तीत्यतः ते ततः प्रागेव धान्यस्य विक्रयणं कुर्वन्ति। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ" इति सूत्रभाष्ये विषयमेतं वर्णयति पतञ्जलिः। तद्यथा- 'नयति देवदत्तः, नाययति देवदत्तेन। वहन्ति बलीवर्दा यवान्-वाहयति बलीवर्दान् यवान्'[16] इति। एतस्मादुदाहरणात् परिमितधान्यवान् स्वयमेव धान्यस्य नयनानयने करोति, अधिकधान्यवान् तु धान्यस्य नयनानयनाय बलीवर्दानामुपयोगं कुर्वन्ति इति ज्ञातुं शक्यते। यस्मिन् समाजे कृषिः मुख्यरूपेण नास्ति तत्र एतादृशव्यवहारः न सम्भवतीत्यतः पतञ्जलिकाले समाजे सर्वत्र कृषेः मुख्यं स्थानमासीदिति सिध्यति॥

**कृषकेषु विद्यमानानि परिमाणानि**

अधुना इव पतञ्जलिकालेऽपि धान्यस्य मापनार्थं विविधानि परिमाणोपकरणानि कृषकाणां मध्ये प्रचारे आसन्। प्राचीनकाले विद्यमानपरिमाणानां नामविषये अधोनिर्दिष्टः श्लोकः प्रमाणत्वेनोपलभ्यते-

“पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्।
चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्॥
अष्टाढको भवेद्द्रोणो द्विद्रोणः शूर्प उच्यते।
सार्धशूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृतम्॥
तामेव भारं जानीयाद्वाहो भारचतुष्टयम्॥”[17]

इति॥ एतस्मादुदाहरणात् पलं (प्रकुञ्चः, मुष्टिः) कुडवः, प्रस्थः, आढकः, द्रोणः, शूर्पः, खारी, गोणी, भारः, वाहः- इत्यादि परिमाणानि प्राचीनकाले प्रचारे आसन्निति सिध्यन्ति। एतेषां परिमाणानां भेदः कः इति पश्यामः। तद्यथा- सेडकस्य (भाषायां सेर्) पादः-पलम् (प्रकुञ्चः, मुष्टिः), चत्वारि पलानि –कुडवः (स एव सेडकः), चत्वारश्च कुडवाः-आढकम् (चतुर्णामाढकानां भाषायां ‘मण’ इत्युच्यते), अष्टाढकः द्रोणः, द्विद्रोणः-शूर्पः, सार्धशूर्पः-खारी, द्वाभ्यां द्रोणाभ्यामधिका खारी गोणी अथवा भारः, चत्वारो भाराः- वाहः इति। एतानि परिमाणानि पतञ्चलिकालेऽपि आसन्निति विचारयामः॥

**गवादीनां परिपालनम्**

यस्मिन् समाजे कृषिः प्रधानरूपेण भवति तत्र निश्चयेन गवादीनाम् उपचारोऽपि प्रधानरूपेण भविष्यति। पतञ्जलिः “चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः” इति सूत्रभाष्ये ‘अश्वघासः, हस्तिविद्या’[18] इत्युदाहरणे प्रदर्शयति। एतस्मादुदाहरणात् तस्मिन् काले कृषकाः यद्यस्य रुचितं तत्तेभ्यो दत्वा निर्वृताः तिष्ठन्ति इति ज्ञातुं शक्यते। अर्थात् न हस्तिभोज्यं गोभ्यो दत्वा, न वा अश्वभोज्यं गोभ्यो दत्वा च ते कृतार्थतां प्रप्तवन्तः इति। एवं “छदिरूपधिबलेर्ढञ्” इति सूत्रभाष्ये पतञ्जलिनोच्यते – ‘इहार्थं तावद्बालेयस्तण्डुलाः आर्षभ्यो वत्सः। ऋषभार्थो घासः। गुणान्तरयुक्ता हि तण्डुला बालेयाः गुणान्तरयुक्तवत्स

आर्षभ्यः'[19]इति। अत्र 'आर्षभ्यो वत्स' इति पतञ्जलिवचनेन 'अयं वत्सः ऋषभत्वे योग्यः वा न वेति' परीक्षणं कृत्वा तादृशवत्सान् एव तस्मिन् काले ऋषभकरणे नियुञ्जन्ति स्मेति सिध्यन्ति। तद्वत् 'ऋषभार्थौ घासः' इति वचनात् गवोपयुक्तघासाः, वृषभोपयुक्तघासाः, वत्सोपयुक्तघासाः इति घासानां विभागः आदृतस्तदानीमासीदिति ज्ञातुं शक्यते॥

पतञ्जलिकाले गवादीनां प्रत्यभिज्ञानादिकं नियतमासीत्। अत्र प्रमाणं "पूर्ववत्सनः" इति सूत्रभाष्ये 'गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य'[20] इति। तद्वत् "अञ्चोऽनपादाने" इति सूत्रव्याख्याने पतञ्जलिः- 'एवं तर्हि अञ्चेरङ्कः। अङ्कश्च प्रकाशनम्। अङ्किता गावा इत्युच्यते, अन्याभ्यो गोभ्यः प्रकाशन्ते'[21] इति वदति। एतस्मात् तस्मिन् काले गवां परिसङ्ख्यानादिकमपि सम्यग्रूपेण आसीदिति सिध्यति। एवं पतञ्जलिः "तृतीया तत्कृतार्थेन गुणवचनेन" इति सूत्रभाष्ये 'गोभिर्वपावान्'[22] इत्युदाहरणं प्रदर्शयति। 'गोभिर्वपावान्' इत्यस्य गोसम्बन्धिदध्याद्युपयोराद्वपावत्वम् इत्यर्थः। एतस्मादुदाहरणात् तस्मिन् काले गोदुग्धस्य प्रचुर उद्गमः स्यात्, तदर्थञ्च दुग्धवाहाद्युपयोगिनां सर्वतः संरक्षणं विधीयते स्म इति ज्ञातुं शक्यते॥

**उपसंहारः**

एवं व्याकरणमहाभाष्यस्य सूक्ष्मपर्यवेक्षणेन दृष्टिपथमवतरति मतिमतां, यत् पतञ्जलिः न केवलं शब्दशास्त्रज्ञ एव, अपि तु समस्तेऽपि प्राचीनविज्ञाने अप्रतिहतमतिः आसीत् इति। अत एव प्राच्याः पाश्चात्याः सर्वेऽपि वैयाकरणाः पतञ्जलिकृतमहाभाष्यस्य पुरतः सर्वदा विनतकन्धरा भवन्ति। एवं 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वाक्यं प्रमाणयितुं महाभाष्यग्रन्थः सुतरां समर्थः॥

**उद्धरणसूची-**

1. ऋग्वेदः-IV-57-1-4-8
2. अथर्ववेदः-III-17-2
3. तत्रैव-II-31,1-5
4. पतञ्जलिः- व्याकरणमहाभाष्यम्-3-1-26, पृ-64.
5. तत्रैव-3-1-87, पृ-119,120
6. तत्रैव- 6-1-50, पृ-58

7. तत्रैव- 2-1-68, पृ-409
8. तत्रैव- पृ-409
9. कौटिल्यः – अर्थशास्त्रम्- प्रकरणम्-40, अध्यायः- 24, पृ-196
10. पतञ्जलिः- व्याकरणमहाभाष्यम्-5-4-50, पृ-414
11. तत्रैव- 7-2-92, पृ-156, 157
12. तत्रैव- 2-1-29, पृ-373
13. तत्रैव- 8-2-44
14. तत्रैव- 2-1-35, पृ-379
15. तत्रैव- 1-3-14, पृ-156
16. तत्रैव- 1-4-52, पृ-174
17. तत्रैव- प्रस्तावना- पृ-6
18. तत्रैव- 2-1-35, पृ-379
19. तत्रैव- 5-1-13, पृ-251
20. तत्रैव- 1-3-62, पृ-175
21. तत्रैव- 8-2-49, पृ- 122
22. तत्रैव- 2-1-29, पृ-373

## BIBLIOGRAPHY

1. कौटिल्यः--अर्थशास्त्रम्- व्याख्याकारः-श्री. वाचस्पति गौरोला, चौखम्बा संस्कृतविद्या-भवन् (प्र), वाराणसी, चतुर्थं संस्करणम्-1991

2. पतञ्जलिः- व्याकरणमहाभाष्यम्- भार्गवशास्त्री जोषी (सं), चौखम्बा संस्कृतप्रतिष्ठान् (प्र), दिल्ली-1992

3. पाणिनिः- अष्टाध्यायी- श्रीश चन्द्रवसुः(सं), मोतिलाल बनारसीदास (प्र), दिल्ली, प्रथमं संस्करणम्-1962

4. भर्तृहरिः- वाक्यपदीयम्-ब्रह्मकाण्डम्, सत्यनारायणखण्डूडी (सं), कृष्णदास् अकादमी (प्र), प्रथमं संस्करणम्-1987

5. **Belvalkar S.K.** - Systems of Sanskrit Grammar, Bharatiya Vidya prakasan, Delhi-1976

6. **Cardona, George** - PANINI - A Survey of research, Motilal Banarsidas Publishers, Delhi-1980

# देवतायाः शरीरं ज्योतिषं च

डा.हरिनारायणन् मन्कुलातिल्लात्
सहाचार्यः तथा अध्यक्षः,ज्योतिषविभागः
सर्वकारीयमहाविद्यालयः,त्रिपुणित्तुरा

**कुञ्चिकापदानि**

देवता,मुहूर्तः, तन्त्रः,कला,आचारः,स्फटः उपासना प्रतिष्ठा इत्यादयः।

**शोधसारः**

देवतायाः स्वरूपं तस्याः शैवशाक्तेयवैष्णवत्वं,कलात्वं ,कलायाःअभिवृध्यर्थं क्रियमाणा तान्त्रिकज्यौतिषविधिः, अर्थात् मुहूर्तादि, तथा देवप्रश्नोक्तचिन्ता च अस्मिन् प्रबन्धे निरूपिताः विषयाः।

देवतापूजनायायाः महत्वमावहन् एव वैदिकक्रियाकलापान् योगशास्त्रेणापि समं सम्मेलयन्ती क्रियमाणा काचित् सुन्दरक्रिया भवति केरलीयतन्त्ररीतिः। तस्य गरिमा वैशिष्ट्यं च सांस्कृतिककेरलाय नितरां युज्यते। तदभिज्ञाय क्षेत्रदर्शनं क्रियते चेदेव सा महती उपासना भवति। प्रादेशिकविश्वासवैचित्र्याणि विभिन्नाः आचाराश्च तान्त्रिकतायाः विपुलार्थं निर्णयन्ति तत्वानि भवन्ति। विभिन्नमन्दिराणि देवताश्च लक्ष्यीकृत्य विरचिताः तन्त्रसमुच्चयादिग्रन्थाः शैवशाक्तेयवैष्णवभेदेन विनैव क्षेत्रकेन्द्रीकृतप्रयोगानुष्ठानेभ्यः गौरवं प्रदीयमानाः भवन्ति। तद्विना क्षेत्रकेन्द्रिताभ्यः बिम्बप्रतिष्ठाभ्यः प्रामुख्यं प्रदायैव केरलीयतन्त्रग्रन्थानां समस्तानामपि रचना। जीर्णोद्धारणाय एकं पटलमेव केरलीयतन्त्रग्रन्थेषु द्रष्टुं शक्यते। तदप्यस्य कार्यगुरुतां करोति।

1. शैवागमनिबन्धनम् - अध्यायः 22, 213 श्लोकाः
2. प्रयोगमञ्जरी - अध्यायः 21, 96 श्लोकाः
3. ईशानगुरुदेवपद्धतिः पु. सं. 612-615, 52 श्लोका:
4. विष्णुसंहिता- अध्याय 24, 93 श्लोका:
5. कलशचन्द्रिका द्वितीयभागः - अध्यायः 1,96 श्लोका:
6. पूटयूर् भाषा -अध्यायः 11, 232 श्लोका:

7. तन्त्रसमुच्चयम् - अध्यायः 11,100 श्लोकाः

एभिः ग्रन्थैः प्रतिपादितानाम् आशयानाम् आधारेणैव केरलीयमन्दिरेषु अद्यत्वे जीर्णोद्धारणप्रक्रियाः क्रियन्ते चेदपि प्रादेशिकाः तथा गुरुपदेशिकाश्च कतिपयभेदाः तत्रान्तर्भूताः दृश्यन्ते। तेषु मध्यत्प्रभावमादधांनः कश्चित् भवति देवप्रश्नः। देवप्रश्नद्वारा दोषान् निर्णीयैव इदानीन्तनकाले जीर्णोद्धारप्रभृतयः परिहारक्रियाः केरलेषु प्रचलन्ति। तस्मादेव केरलीयतन्त्रवैशिष्ट्यमित्येतद् फलचिन्तायाः वैशिष्ट्यमेव इति वस्तुता स्तुत्यर्हा वर्तते।

**मुहूर्तप्राधान्यम्**

श्रौतकर्मणां कर्ता पौनःपुन्येन रक्ष्यते इति कारणतः एव तत्त्वदर्शिभिः महर्षिभिः शुभकालस्य मुहूर्तमित्यभिदीयते। अह्नः रात्रेश्च पञ्चदशभागानां एकः अंशः भवति मुहूर्तो नाम। "मुहुः ऋच्छति गच्छति" इति मुहूर्तः। शुभक्रियाकाल इव मुहूर्तः अशुभक्रिया-कालोऽपि वर्तते। शुभमुहूर्त तथा अशुभमुहूर्तः इति पृथक्कृत्य वक्तुं शक्यते इत्येव। तस्माद् शुभकर्मेभ्यः योग्य कालः शास्त्ररीत्य निर्देष्टु धार्मिकदायित्व दैवज्ञस्य अस्ति।

शुभक्रियायोग्यकालं आदिशद्भिः मुहूर्तः न केवलं सद्गुणयुतः भवेत् अपिच निर्दोषयुतोऽपि भवेदिति कार्यं न विस्मर्तव्यम्। तद्वदेव नूतनतया निर्मातव्यस्य मन्दिर-सम्बन्धि तथा सांप्रतिकमन्दिरसम्बन्धि च भवितुमर्हति देवप्रश्नः। नवीनतया निर्मितस्य मन्दिरस्य नवप्रतिष्ठा चेदपि शुभमुहूर्ते एव प्रतिष्ठापनं कार्यम्।

**प्रतिष्ठामुहूर्तविधिः**

देवप्रतिष्ठा, सङ्कोचः, निष्क्रामणं, अष्टबन्धः इतीमानि प्रतिष्ठादिचतुष्कं इत्याख्यायन्ते। इमानि च तत्रेषां योग्यकाले शुभमुहूर्ते एव कुर्युः।

पक्षेऽच्छेऽयन उत्तरेऽन्नभमखास्स्विष्टाः प्रतिष्ठादयोः
वर्ज्याः वारुणसौर्यसृग्दिनधनुर्मेषैणजूका इहः।
धीस्था रन्ध्रशुभान्त्यगाऽपिखराः पूर्वौ निशात्र्यंशकौ
विद्धर्क्षं च मतोऽष्टबन्ध उभयोः पक्षायनद्वन्द्वयोः[1] ॥

1. देवप्रतिष्ठानिमित्तं उत्तरायणम्, शुक्लपक्षम्, शतभिषजः ऋते विद्यमानानि इतरान्नप्राशननक्षत्राणि, मखा, शनिकुजौ विहाय इतरवासराः च शुभानि इति कल्प्यन्ते।

2. मेषतुलाधनुर्मकरराशयः प्रतिष्ठादिमुहूर्ताय शुभाः।

3. मुहूर्तलग्नस्य 5, 8, 9, 12 इत्यादिषु भावेषु पापग्रहाः न भवेयुः

4. मेषः, सिंहः, वृश्चिकः, कुम्भः इत्यादिस्थिरराशयः उदयलग्नो भवति तर्हि ते प्रतिष्ठादिकार्येभ्यः शुभाः। मिथुनं, कन्या, धनुः, मीनमित्यादयः उभयराशयः मध्यमाः मेषकर्कटतुलामकरेत्यादि चरराशयः अधमाश्च भवन्ति।

5. रात्रेः त्रिभागद्वयं वेधवर्गनक्षत्राणि च वर्जनीयानि।

**प्रतिष्ठाराशिफलम्**

वंशनाशाय मेषे स्याद् वृषे स्युः सर्वम्बदः
मिथुने स्युः शुभाः सर्वे कर्कटे चार्धनाशनम्।
इष्टार्थसिद्धः सिंहे कन्यकायां शुभायतिः
तुलायां मरणं शीघ्रं वृश्चिके सर्वसम्पदः॥
चापे वित्तसुखध्वम्सो मृगे स्यादर्थनाशनम्
कुम्भे शुभसमृद्धिः स्यात् मीने स्यात् सर्वशोभनम्[2]॥

प्रतिष्ठामुहूर्ते 12,09,08 इत्यादिषु राशिषु पापाः यदि तिष्ठन्ति तर्हि क्रमेण तन्त्रिशिल्प-बिम्बादीनां शोभनं न भवति। तथा च प्रतिष्ठितदेशस्य राजा, क्षेत्रनाथः, ग्रामाधिपः इत्येषां त्रयाणां अष्टमराशिः द्वादशराशिः 3, 5, 7 नक्षत्राणि वर्जनीयानि। प्रतिष्ठादेवस्य जन्मनक्षत्रं ज्ञायते तर्हि तस्याष्टमराशिः मुहूर्ताय वर्ज्यते।

**प्रतिष्ठावारफलम्**

तेजस्विनी क्षेमकृच्य वह्निदाहविधायिनी
वरदाथ दृढानन्दकरी च गृहवासिनी
भवेत्सूर्यादि वारेषु प्रतिष्ठेति बुधा जगुः
विप्राणां स्थापनेवारौ शुभदौ गुरुशुक्रयोः

 ISSN : 2277-2359

क्षात्रियाणां च सूर्येन्द्वोर्बुधवारो विशांशुभः

शूद्राणां च प्रतिष्ठायां मन्दवारः शुभावहः[3]॥

रविवारः – तेजोवर्धनम्

सोमवारः – क्षेमः

कुपवारः - अग्निभीतिः

बुधवारः - शुद्धचैतन्यम्

गुरुवारः - शुद्धचैतन्यम्

शुक्रवारः - आनन्दकरम्

शनिवारः - क्षेत्रमात्रचैतन्यम्

प्रतिष्ठानुबन्धतया दशदानानि नक्षत्राचरणादेशरीतिश्च केरलीयानि भवन्ति। धेनुर्भूमिर्तिल-सुवर्णनवनीतवस्त्रधान्यशर्कयरजतलवणानि दशदानानि इति स्म्रियन्ते।

**नक्षत्राचरणम्**

विष्णोः श्रावणाः, शिवस्य आर्द्रा, कृष्णस्य रोहिणी, श्रीरामस्य पुनर्वसुः, शास्तुः, उत्तरफाल्गुनी इत्येवं एकैकस्यापि देशस्य जन्मनक्षत्रेन प्रत्येकं नक्षत्रमुच्यते। प्रतिष्ठानक्षत्रं यदि कालेन गणयितुं न शक्यते तर्हि एतदनुसृत्य अष्टमराशिः निर्णेतव्या। प्रतिष्ठानक्षत्रं ज्ञायते तर्हि तत्रस्य मूर्तेः जन्मनक्षत्ररूपेण स्वीकरणीयमित्येव विधिः। विष्णु शिवप्रभृतयः देवाः अजाः भवन्ति। अजन्मनां नक्षत्रमपि न वर्तेत। तस्माद् नक्षत्रसङ्कल्पः इत्येतद् प्रतिष्ठादिनस्य नक्षत्राचरणमिति भवति। अनन्तरम् अवतारमूर्तीणां विषये तु विचिन्त्यते तर्हि ते भूमौ अवतारिताः भवन्ति। एक एव देवः मनुष्यपशुपक्षिरूपाणि धृत्वा भिन्ननक्षत्रेषु अवतारिता अस्ति। श्रावणनक्षत्रजातसङ्कल्पितस्य विष्णोः श्रीरामावतारकाले पुनर्वसुः श्रीकृष्णजन्मकाले रोहिणी च भवति। इतरावेतारेष्वपि अयं भेदः दृश्यते। किन्तु एषां चैतन्ये विभेदः न भवति इत्येतदेव अस्य प्राधान्यम्। तथैव शिलादारुमयेषु बिम्बेष्वपि देवः इत्यमेव अवतरति। अर्चनोपाधिषु नियतसन्निधिः एव प्रतिष्ठयाः समुद्धिश्यते। तच्च देवस्य आविर्भागो भवति। तस्य दिनस्य नक्षत्रं च तद्देवतायाः अपि नक्षत्रं भवति। उत्सवविधौ स्वक्षन्निमाकल्प्य इत्यत्र प्रतिष्ठानक्षत्रमित्येव अर्थः। नो चेत् तत्तद्देवानां पञ्चकेषु यं कमपि

आधारीकृत्य उत्सवतिथिं जिश्चेतुं शक्यते इत्यपि उच्यते। केरलीयमन्दिरेषु नक्षत्राचरणाय तत्फलचिन्तनाय च विशिष्टं स्थानं कल्पयति। मुहूर्ताचरणस्य अनुबन्धितया निरपुत्तरि, कुम्भपूर्तिः नवान्नम्, विषुवद्दर्शनं, ध्वजारोहणं, इत्यादयः विषयाः अपि विशेषतया चिन्तनीयाः भवन्ति। तथा च दूतनक्षत्रं प्रश्नस्य कश्चिदङ्गः भवति। दूतदैवज्ञयोः समागमनक्षत्रं देवप्रश्न समस्य नश्रत्रं इत्यादयोऽपि विषयाः फलचिन्तायाः सविशेषताः भवन्ति। मन्दिरेषु नक्षत्रविशिष्टाः पूजाः तिथिवासरादिविशेषाश्च अत्र आकलिताः सन्ति।

**टिप्पण्यः-**

1. मुहूर्तपदवी, पृष्टसङ्ख्या-250, श्लोकः-22.
2. मुहूर्तपदवी, तत्रैव व्याख्या, पृष्टसंख्या-252-253.
3. मुहूर्तपदवी, तत्रैव व्याख्या, पृष्टसंख्या-252
4. देवप्रश्नः, अध्यायः-4, पृष्टसंख्या-148 श्लोकः-40.
5. प्रश्नमार्गः, अध्यायः-8, पृष्टसंख्या-134 श्लोकः-1.
6. देवप्रश्नः, अध्यायः-7, पृष्टसंख्या-214 श्लोकाः-34, 35, 36.

**सहायकग्रन्थसूची**

1. उण्णिक्कृष्णन् नम्प्यातिरी वि.(डो.) - मुहूर्तविज्ञानम्, आदित्या पब्लिक्केषन्स्, तिरुपतिः, 2002.
2. उण्णिक्कृष्णन् नम्प्यातिरी वि. (डो.) - वास्तुविज्ञानम्, न्यूभारतीयबुक् कोर्परेशन्, नवदिल्ली, 2015.
3. दीनानाथ झा – पञ्चाङ्गविज्ञानम्, चौखम्बा संस्कृत सीरीज आफीस, बनारस, 1951.
4. नारायणन् नम्पूतिरी चेरुवल्लि - आचारसङ्ग्रहः, व्याख्या, दैवज्ञपरिषद्, कोषिक्कोट्, 2012.
5. नारायणन् नम्पूतिरिप्पाट्, चेन्नास् – तन्त्रसमुच्चयः, एस्.टी.रड्ड्यार् सण्स्, तिरुवनन्तपुरम्, 2012.
6. नीलकण्ठशर्मा पुन्नश्शेरी - प्रश्नमार्गः, उत्तरार्धम्, देवीबुक्स्टाल्, कोटुङ्ङल्लूर् 2004.

7. नीलकण्ठशर्मा पुन्नश्शेरी - प्रश्नमार्गः, पूर्वार्धम्, देवीबुक्स्टाल्, कोटुङ्ङल्लूर् 2004.
8. भासिन जे.एन् - प्रश्नमार्गः, व्याख्या, रञ्जन् पब्लिकेषन्स, न्यूदिल्ली, 1978.
9. मात्तूर् नम्पूतिरिप्पाड् - मुहूर्तपदवी, पञ्चाङ्गं पुस्तकशाला, कुन्नङ्कुलम्, 2005.
10. माधवाचार्यः, माधवीयम्, एस् टि.रेट्टियार् आन्ट् सण्स्, तिरुवनन्तपुरम्, 2005.
11. रामदैवज्ञः – मुहूर्तचिन्तामणिः, चैखम्बा संस्कृत संस्थान्, वाराणसी, 2006.
12. शङ्करगणकः औणक्कूर् - देवप्रश्नः, करन्ट्बुक्स्, कोट्टयम् 1981.

# श्रीशङ्कराचार्यमते स्तोत्रसंस्कृतिः

**डा. बिन्दुश्री के. एस्**
सहाचार्या, संस्कृतविभागः
तिरुवनन्तपुरं विश्वविद्यालयः, तिरुवनन्तपुरम्

**कुञ्चिकापदानि**

शङ्कराचार्यः, स्तोत्राणि, प्रकरणानि, दक्षिणामूर्तिः, गुरुः, भक्तिः, अद्वैतम्।

**शोधसारः**

अद्वैताचार्यः श्रीशङ्कराचार्यः ब्रह्मसूत्रभगवद्गीता उपनिषद्रूपप्रस्थानत्रयस्य भाष्य-रचनेन लोकोत्तरः संजातः। किन्तु अतिविशिष्टाः स्तोत्रतल्लजाः अपि आचार्येण विरचिताः। तेन विरचितानि स्तोत्राणि न केवलं स्तुत्यर्थं विरचितानि विविधदेवतातत्त्व-प्रकाशनपराणि इमानि स्तोत्रणि वेदान्ततत्वबोधकानि च भवन्ति।

**उपक्रमः**

केरलेषु कालटिग्रामे लब्धजन्मा श्रीशङ्कराचार्यः ब्रह्मसूत्र-भगवद्गीता-उपनिषद्रूप-प्रस्थानत्रयस्य भाष्यरचनेन लोकोत्तरः संजातः। अस्य भाष्यमधिकृत्य सुदीर्घपठनानि सजीवचर्चाश्च अद्यापि प्रचलन्ति। न केवलं दार्शनिकग्रन्थाः किन्तु अतिविशिष्टाः स्तोत्रतल्लजा अपि आचार्येण विरचिता एव।

श्रीशङ्करः क्रिस्तोः परं अष्टाशीत्यधिकसप्तमशतके केरलेषु कालटिग्रामे पूर्णानद्याः तीरे शिवगुरु-आर्याम्बानामकयोः दम्पत्योः पुत्रः समजायत। गुरुकुलवासमये एकदा भिक्षां अटन् अयं ब्रह्मचारी, एकस्य अग्रे स्थितः। दारिद्र्यदुःखावस्थायां अपि तद् गेहवासिनी नारी भिक्षापात्रं कतिपयैः आमलकैः अरिक्तम् अकरोत्। तस्याः हृदयवैशिष्ट्यं शिशुं शङ्करं आर्द्रचित्तं व्यतनोत्। सद्य एव महालक्ष्मीं कनकधारा स्तोत्रेण स्तुवन् तद्गेहे कनकामलयोः वर्षणं अकारयत् इति विचारः प्रसिद्धः वर्तते। नर्मदातीरे गुहायां समाधिस्थं गोविन्दाचार्यम् उद्बोधयितुं, शङ्करः गुरुमाहात्म्यपरं श्लोकदशकं क्षणेन मनसा विरच्य अश्रावयत्। इदं श्लोकदशकं दशश्लोकी इति नाम्ना प्रसिद्धम्।

गुरोराज्ञया काशीं प्राप्तः शङ्करः पद्मपादाख्यं प्रथमं शिष्यं लेभे। सुरेश्वरः हस्तामलकः, तोटकश्च शङ्करस्य अपरे शिष्याः बभूवुः। एकदा मार्गमध्ये चण्डालमेकं दृष्ट्वा तन्मार्गं परिहर्तुं कृतोद्यमः शङ्करः, वर्णः आत्मनो वा शरीरस्य वा इति चाण्डालवेषभाजा परमशिवेन पृष्टो, यत्किञ्चिदपि हृद्गतं जातिभेदं प्रजहौ, इति मनीषापञ्चके सूचितम्[1]। ततो बदरिकाश्रमं प्राप्तो व्यासस्य दर्शनं लेभे। काशितः शङ्करः प्रयागाम् उपगतः। तत्र कुमारिलभट्टेन सह वेदान्तविचारचर्चायां संलग्नो अभूत्। मातुः मरणकालं आसन्नं ज्ञात्वा स्वकीयप्रतिज्ञां समृत्वा मातृदर्शनाय जगाम श्रीशङ्करः। मातृमुक्त्यै शङ्करः शिवभुजङ्ग-प्रयातस्तोत्रं तां अश्रावयत्। किन्तु तस्याः मनः श्रीकृष्णविलीनं ज्ञात्वा विष्णुभुजङ्गं च तां श्रावयति स्म शङ्करः। दिक्षुविदिक्षु पर्यटन् अद्वैततत्वं प्रचारयामास शङ्करः। सर्वत्र विविधदार्शनिकानां सिद्धान्तान् युक्तियुक्तं खण्डयन्, काश्मीरदेशस्थं सर्वज्ञपीठम् उपारूढः अयं विद्वदग्रेसरः। स्वकीयशिष्यैः, आचार्यः चतुर्ममठान् स्थापयामास। जगन्नाथपुरी, शृङ्गेरी, द्वारका, ज्योतिर्मठाख्येषु चतुर्षु मठेषु क्रमशः पद्मपादः, सुरेश्वरः, हस्तामलकः, तोटकश्च, मठाधिपतयः अभवन्।

अल्पेनैव कालेन भारतस्य यशः सर्वलोकेषु प्रसारयन् विशिष्टोऽयं कविः लघुवयसि ब्रह्मभूयं गतः। उपनिषत्तत्वं जीवात्मपरमात्मनोः अद्वयावस्था एवेति निरूपयन्, अतिसरल रीत्या तत्त्वं सर्वग्राह्यं वितन्वन् लोकोत्तरः जातः अयं शङ्करः। शङ्करस्य कृतयः भाष्यप्रकरणस्तोत्ररूपेण त्रिधा विभक्ताः। ब्रह्मसूत्राणां, भगवदगीतायाः उपनिषदां च भाष्याणि आचार्यशङ्करेण कृतानि। तेषां रचनेन प्रस्थानत्रयभाष्यकर्ता इति ख्यातिम् उपगतः श्रीशङ्करः। अतिरहस्यभूतं वेदतत्वं अतिसरलया रीत्या स्पष्टीकर्तुं सहायकानि श्रीशङ्करस्य भाष्याणि। अतिनिगूढं यद् उपनिषद्रहस्यं शङ्करेण अतिसरलया मनोग्राह्यं कृतम्।

**प्रकरणानि**

प्रायशो वैज्ञानिकग्रन्थाः सुदुर्विज्ञेयाः। तादृशग्रन्थालोकाय सम्यग् विज्ञानाय च उपकाराणि भवन्ति प्रकरणानि। भूरिशः ईदृषग्रन्था आत्मविषयपराः वेदान्ततत्वबोधं विना

ईदृग् ग्रन्थेषु प्रवेशः न सुलभो मनुष्याणाम्। परिणतप्रज्ञेन आचार्यशङ्करेण ग्रन्थरहस्यावबोधनपराणि प्रकरणानि विरचितानि।

**स्तोत्राणि**

स्तोत्राणि प्रायशः स्तुतिपराण्यपि केवलं स्तुत्यर्थं एव न विरचितानि शङ्करेण स्तोत्राणि। विविधदेवतातत्वप्रकाशनपराणि इमानि स्तोत्राणि वेदान्ततत्ववेदकानि च भवन्ति। जननमरणदुःखक्लिष्टस्य जन्तोः सौख्यार्थमपि आचार्येण स्तोत्राणि विरचितानि।

वेदान्तस्तोत्राण्यपि शङ्करस्य प्रसिद्धानि उपलभ्यन्ते। शाङ्करकृतानां श्लोकानां संख्यागणना अद्यापि न स्मपूर्णा। कानिचित् स्तोत्राणि केश्चित् अन्यैः कृतान्यपि अत्र अन्तर्भविचानि इति केचन मन्यन्ते। अर्धनारीश्वरस्तोत्रम्, कालभैरवाष्टकम्, शिवनामवल्ली अष्टकम् च श्रीमच्छङ्करभगवत्पादैः विरचितनि शिवष्टरकानि शिवस्य अवतारभूताद्वैताचार्यः इति च प्रसिद्धिम् उपगतः श्रीशङ्करः विष्णोः वीर्याणि प्रशंसन् अनेकान् स्तवान् विरचितवान्। शिवो वा विष्णुर्वा साक्षात् ब्रह्मस्वरूपं इति शैववैष्णवानां मिथे मतभेदो वर्तते एव। किन्तु शिवे विष्णुं विष्णेः शिवं च अभेदेन पश्यति आचार्यः। शङ्करस्य मोहमुद्गरं इति प्रसिद्धस्तवे "भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता। सकृदपि येन मुरारि समर्चा क्रियते तेन यमेन न चर्चा ""। इति मुरारेः गङ्गायाः, श्रीकृष्णस्य, भगवद्गीतायाश्च वैशिष्ट्यं आचार्येण निस्तर्कम् अवतार्यते।

देवीपराणां स्तोत्राणं रचयिता भवति श्रीशङ्कराचार्यः। नानारूपाणि वर्णितानि स्तोत्राणि आतीव हृद्यानि परिलसन्ति। काशीपुरं विराजमान विश्वेश्वरप्रयसि अन्नपूर्णेश्वरी अत्र एवं प्रस्तूयते। भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरीं इति। नदीस्तुतिपराणि स्त्रोत्राणि अपि सन्ति। गङ्गा, यमुना, नर्मदा इत्यादि नद्यः अत्र उपवर्णिताः।

भारतदेशे अतिप्राचीनकालादारभ्य विग्रहाराधना विग्रहनिष्ठा देवतास्तुतिश्च लब्धप्रचारा आसीत्। दक्षिणामूर्तिस्वरूपं एवमेव - वटविटपिमूले ध्याननिमग्नो दक्षिणामूर्तिः। तस्य हस्ते, चिन्मुद्रा अथवा ज्ञानमुद्रा प्रकटं दृश्यते। निर्वाचं मौनेनैव ज्ञानोपदेशं करोति गुरुः। अस्मिन् स्तोत्रे मौनाख्या प्रकटितपरब्रह्मतत्वं दक्षिणामूर्ति स्तोति

शङ्करः[2] शब्दविहीनोऽयं तत्त्वोपदेशः अध्यात्मिकतले कृतो भवति। मौनेन उक्तं परमं तत्त्वं शिष्यः निस्संशयं गृह्णाति। मिथ्यात्मकजगतो निवृत्य, ब्रह्मात्मकतत्वाय शिष्यान् नयन्ति आचार्यः।

अर्धनारीश्वरस्तोत्रे ज्ञानरूपी शिवः चैतन्यस्य प्रतीकं भवति। पार्वती शक्तिस्वरूपिणी, जडात्मकप्रकृतेः प्रतीकं भवति। सौन्दर्यलहर्याख्ये ग्रन्थे "शक्तिस्वरूपस्य प्राधान्यं प्रस्तुतं भवति। प्रारम्भश्लोके एव अस्य उदाहरणम्। शिवशक्त्या युक्तौ यदि भवति शक्तः प्रभवितुम्। न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि"[3]। जगदुत्पत्तिस्थितिलयानां प्रत्यक्षदर्शनं शिवशक्तिसंयोगद्वारा लभते। अर्धनारीश्वरतत्वमपि इदमेव सूचयति। श्रीशङ्करः अर्धनारीश्वरस्तोत्रे अपि द्वन्द्वभावानां समन्वयं करोति। श्रीशङ्करस्य भ्रमराम्बाष्टके षड्चक्रमध्यस्थिता श्रीशैलवासिनी भ्रमराम्बा प्रस्तूयते[4]।

मानवशरीरं ब्रह्माण्डस्य प्रतिफलनमिति श्रीचक्रेण सूच्यते। श्रीचक्रे यद् बिन्दुस्थानं तत् मनुष्यशिरसि ब्रह्मरध्रमिति कल्प्यते। षड्चक्रमध्ये श्रीदेवी स्थिता वर्तते। श्रीचक्रबिन्दु-स्थानं शिरोगतब्रह्मरध्रमिति ज्ञातव्यम्। मूलाधारचक्रात् कुण्डलिनीं ऊर्ध्वम् आवाह्य, सहस्रारपद्मप्रापणमेव मुक्तिः। तदूर्ध्वं ब्रह्मरन्ध्रम्। षड्चक्रमध्ये देव्याः स्थानं ब्रह्मरध्रमेव। ब्रह्मरध्रास्थितिद्वारा परमात्मनः स्वरूपं व्यक्तीभवति।

मनश्चेन्नलग्नं गुरोरघ्रिपद्मे ततः किं, तत् किं, ततः किं, तत किम् इति चेद्यावलि रूपेण श्रीशङ्करेण स्वकीयगुर्वाष्टके गुरुमहिमा उपवर्णिता[5]। भारतदेशे गुरुपरम्परा नितरां प्रचलितम् अस्ति। बृहस्पतिः देवगुरुः, शुक्राचार्यः असुरगुरुः इति प्रसिद्धि उपगतौ। सुदीर्घा गुरुपरम्परा भारतदेशस्य संस्कृतेः निदानभूता। गुरुभक्तिप्रकाशनपराः अनेकाः कथाः पुराणेतिहासेषु उपलभ्यन्त। सर्ववेदान्तरहस्यगर्भासु उपनिषत्सु तत्त्वबोधनं गुरुशिष्यसंवादरूपेण एव क्रियते। भूताभिवृद्धिरपि मनसः गुरुवैमुख्यं चेत् निष्फल एव इति गुर्वाष्टकद्वारा आचार्यः समर्थयति।

उपनिषत्तत्त्वगर्भं वेदान्तदर्शनम् द्वैते वा अद्वैता वा विशिष्टाद्वैते वा समाधिष्ठितम् इति विषये दार्शनिकाः भिन्नमतस्था दृश्यन्ते। किन्तु श्रीशङ्करस्य अद्वैतमेव, नितराम् उत्कृष्टमिति गणयन्ति भूरिशो विद्वांसः।

निर्गुणसगुणब्रह्मविवेकः, मायावादः "ज्ञानादेव तु कैवलम्" इति स्थितिः, मुक्तिभेदाः एते शङ्करवेदान्तस्य प्रधानभूतानि तत्त्वानि। "यतो वा इमानि भूतानि जायन्ते" इति उपनिषद्वाक्यम् निर्गुणब्रह्मविषयज्ञानादेव मुक्तिरिति सूचयति ब्रह्मोत्तरं सर्वं प्रापञ्चिकं वस्तु मायया निर्मितम्। केवलं ब्रह्म एव सत्यम्। दृश्यप्रपञ्चं तावत् मिथ्याधीनम्। "जीवो ब्रह्मैव नापरः" इति गीताभाष्ये शङ्करेण इदं स्पष्टीकृतम्। अस्मिन्नेव भाष्ये अपरत्र तस्मात् केवलादेव तत्वज्ञानात् मोक्षप्राप्तिः इत्यपि आचार्येण उक्तमस्ति।

यद्यपि मोक्षेपायः ज्ञानं, तथापि ज्ञानप्राप्तिः कर्माणा अपि इति आचार्यः निर्दिशन्ति। ज्ञानमार्गे प्रविष्टस्य पुनः कर्म न विद्यते। ज्ञानपूर्ववस्थामेव मनुष्याः यागकर्मादीन् अनुतिष्ठन्ति इति ये अविद्यां अग्निहोत्रादि लक्षणां एव केवलम् उपासते इति वाक्येन स्पष्टीकरोति। अद्वैतभावनां अधिकृत्य शङ्करस्य दर्शनं वेदान्तर्गतं भवति। इदं दृश्यप्रपञ्चं यस्मात् उद्भूतं तद् ब्रह्मैव भवति। ब्रह्म च एकं तथा नित्यं च। अजरः अमरः परमात्मा इत्यादि नामधेयैः ब्रह्मव्यवहृतं भवति। सर्वदा द्वित्वबोध एव सर्वदुःखानां कारणमिति शङ्कराचार्यस्य मतम्। इयमेव अवस्था श्रीमन्नारायगीये एवं प्रसूच्यते भीतिर्नाम द्वितीयात् भवति। ननु मनः कल्पितं च द्वितीयम्।

द्वितीयावस्था एव भीतेः हेतुभूता। सा तु मनः कल्पिता। अस्या अवस्थयाः विमोचनम् अनिवार्यम्। द्वित्वबोधननाशाय एकत्वचिन्ताभ्यासः आवश्यकः। आचार्येण प्रतिपादितमस्ति। अनेन कर्मणः परिणामेषु संस्कार्यां अथवा पवित्रीकरणं अन्यतमं सिद्धयति। पवित्रीकरणं नाम मनःशुद्धिरेव। मनः शुद्धिरेव ज्ञानलब्धेः पूर्वं अवश्यं भावि। एवं मोक्षसाधानत्वं कर्मणोऽपि सिद्धयति।

कर्मणो महत्वे एवं सिद्धे ततोऽपि श्रेष्ठतरं स्थानं भक्तेः अस्ति। श्रीमद्भागवतादि विशिष्टग्रन्थेषु भक्तेः माहात्म्यं निस्तर्कं प्रतिपादितम्। यद्यपि ज्ञानस्य एव परमप्राधान्यं

शङ्करेण कल्पितं तथापि व्यासशुकादि ब्रह्मर्षिभिः अपि प्रस्तुताया भक्तेः निषेधः आचार्य शङ्करोऽपि न विद्यते। आन्तरिकसत्वबोधने मनोबुध्योः सहायता अत्यन्तापेक्षिता अस्ति। अत एव अद्वैताचार्येण शङ्करेण उभयोः मनोबुद्धयोः परिपोषणार्थं परिश्रमः कृतः। बुद्धेः कृते ब्रह्मतत्वप्रकाशः कृतश्चेत् मनोविशुद्धै ललितकोमलपदवलीभिः कर्णनन्दकर स्तोत्राप्यपि तेन विरचितानि।

**टिप्पणिः**

1. चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम। मनीषापञ्चकम्।
2. शङ्काराचार्यः, दक्षिणामूर्त्यष्टकम्। श्लो – 1
3. सौन्दर्यलहरी, श्लो – 1
4. भ्रमराम्बाटकम् श्लो – 4
5. गुर्वाष्टकम्, श्लो – 1

**सहायकग्रन्थाः**

1. श्रीशङ्कराग्रन्थावलिः, समता बुक्स्, मद्रास, 1981
2. श्रीशङ्करदिग्विजयम्, विद्यारण्यविराचितम् व्याख्याता- डा. पूवट्टूर रामकृष्णपिल्ल, श्रीशङ्करसस्कृतसर्वकलाशाला, कालटि, 1999
3. सौन्दर्यलहरी, शङ्कराचार्यः, मातृभूमि प्रिन्टिङ् आन्ट् पब्लीषिङ् कम्पनि लिमिट्ट, 1988
4. आत्मबोधम्, शङ्कराचार्यः, सेन्ट्रल चिन्मयामिषन् ट्रस्ट्, तृप्पूणित्तुरा, 1998
5. भहवद्गीता, शांकरयाष्यम्, सदानन्दप्रस्स्, सदानन्दपुरम्, 1995.

# चाणक्यवाक्प्रबन्धनसंस्कृतेर्विचारः

**डा.डि.वेणुगोपालरावः,**
सहायकाचार्यः, शिक्षाशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, गुरुवायूर् - परिसरः.

**कुञ्चिकापदानि**

वाक्कौशलम्, वाक्प्रबन्धनम्,वाक्संस्कृतिः, नैसर्गिकी,शिष्टवाक्, व्यावसायिकता, नवशिक्षानीतिः(NEP)।

**शोधसारः**

वाणी तु मानवसमाजस्य प्राणभूता भवति। यथा प्राणेन मानवशरीरस्य अस्तित्वं विभाति, तथैवानया वाण्यैव मानवचेतनता विशेषतया विभाति। मानवस्य शारीरिक-व्यवहारः मानसिकव्यवहारश्चेति व्यवहारद्वयं विद्यते। अनयोः द्वयोः व्यवहारयोः कारणेनैव मानवः सामाजिकक्षेत्रेषु स्वकर्मनिरतः भवति। शारीरिकव्यवहारस्तु बाह्यव्यवहारः प्रत्यक्षः अवबोधयोग्यश्च भवति। मानसिकव्यवहारस्तु आन्तरिकः, अप्रत्यक्षः, अवबोधायोग्यश्च भवति। मानवाय मानसिकव्यवहाराभिव्यक्तये, अभिज्ञाने च साधनरूपेण इयं वाणी एव वरप्रदा भवति। इयं वाणी एकैव पुरुषम् अर्थात् मानवसमाजं समलङ्करोति इति भर्तृहरिः। अत एव कथ्यते यत् -

**वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते** इति।

वागियं मानवाय आशयविनिमये, मार्गदर्शने, हितकरणे, लक्ष्यसाधने, अवरोधने, वञ्चने, नाशने चेति बहुप्रकारकरूपेण साधनवदुपकरोति। मानवेन प्रयुज्यमाना नवरसभरिता वगैकैव विभिन्नार्थान् प्रतिपादयतीत्यपि विस्मयात्मकं भवति। शनैः, त्वरया, मन्दं मन्दं, सपरिहासेन, गूढतया, अवरोधनेन, प्रत्यक्षतया, परोक्षतया च कथ्यमानवाण्याः वाग्वैचित्र्यता अनुभवैकवेद्यैव भवति। अभिधा, लक्षणा,व्यञ्जनेति आलङ्कारिकैः निरूपिता वाणी तु काव्याद्यवेक्षणानुज्ञैव। तावत्किं, मानवैः मौनेन अशाब्दिकरूपेण वा प्रकट्यमाना वाण्यपि लक्ष्यानुगामिनी एवेति वाग्वैचित्र्यता। इत्थंवागियं प्रत्येकं क्षेत्रे मानवस्य

 ISSN : 2277-2359

सुखदुःखात्मकेषु कार्येषु कारणभूतापि भवति।तथैव वाण्याः त्रैकालिकः प्रभावः सर्वैरपि अङ्गीकृतः वर्तते। **शतं वद एकं मा लिख** इति लौकिकाभाणकानि तदेव तत्त्वं निगदन्ति। उपर्युक्तरीत्या वाग्वैचित्र्यताचिन्तनावसरे संस्कृतसाहित्यात् असंख्याकाः कथाः, संवादाः, सङ्घटनाः,सन्निवेशाः, दृष्टान्ताः, उदाहरणानि वा समेषां हृदि वाक्कौशलस्य माहात्म्यं विज्ञापयन्ति। अनेन ज्ञायते यत् – प्रत्येकं मानवस्य जीवने वाक्कौशलप्रबन्धनसंस्कृतिः अनिवार्यैति। इत्थं समागतमानसिकविचारेण संस्कृतच्छात्रेषु संस्कृतसाहित्यपठनाभिरुचि-वर्धनाय संस्कृत-प्रबन्धकाग्रगण्यस्य चाणक्यस्य मतानुगुणं वाक्प्रबन्धनसंस्कृतेः विचारानत्र यथामति प्रस्तौमि।

**भूमिका -**

**वाण्येका समलङ्करोति पुरुषं या संस्कृताधार्यते . . . सततं वाग्भूषणं भूषणम्** इति खलु वाण्याः अस्याः परलोके मानवसंसारे च गरिमा जेगीयते। तस्याः वाचः उत्पत्तिः प्रवृत्तिस्तु **आनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा, आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः** इत्युक्तरीत्या अपौरुषेयता, ईश्वरकल्पिता, स्वयम्भुवा वा चेति मन्यते। अक्षरं, पदं, वाक्यं, प्रबन्धः, ग्रन्थः, भाषणं, पठनं, वाचनं, उपदेशः, मन्त्रणम्, अनुदेशनम् इत्यादिषु मानवव्यवहारसम्बद्धेषु विचारेषु इयं वागेव प्राणभूता भवति। वागभावे मानवलोकस्य अस्तित्वमेवागम्यगोचरं दृश्यते। समजात् पृथगीकृत्य मानवं समाजे तथा तदुन्नतक्षेत्रेषु गरीयस्थाने उपस्थापयति इयं वागिति कथने नातिशयोक्तिः। मानवाय जन्मारभ्यान्तं यावत् वागियंस्वीयया सहजप्रवृत्या स्वशक्त्या स्वशैल्या च कल्पलतैव सर्वसिद्धिप्रदायिनी भवति। इयं **वाणी मौखिकी तथा नैसर्गिकीति** द्विधा भवति। या मुखेन कथ्यमाना सा मौखिकी वाचिका वेति, तथा विलिख्य या कथ्यमाना भवति सा नैसर्गिककीति कथ्यते।तथैव वागियमपौरुषेयी पौरुषेयी, परा अपरेति भारतीयसंस्कृतपरम्परया ज्ञायते। तत्र च विशिष्य तत्तच्छास्त्रानुगुणं चेयं वाक् अनन्तरूपा वर्तते। अकुहविसर्जनीयानां कण्ठः, इचुयशानां तालुः इति व्याकरणशास्त्रधिया तु तस्याः वाचः उत्पत्त्युच्चारणप्रकाशनक्रमश्च वैज्ञानिकरीत्या, प्रायोगिकरीत्या निरूपिता प्रतिपादिता च।

 ISSN : 2277-2359

भारतीयसनातनपरम्परायां तु वाण्याः वाचः वास्याः पठनपाठनसंस्कृतिः तथा आचारव्यवहाररीतिः च सुसंस्कृता आसीत्। आबालगोपालं यावत् भारतीयाः सर्वे संस्कृतेन संस्कृत्या च कठिबद्धाः इत्यतः समाजकल्याणकरिणी सा आसीत्। अतः कथ्यते हि चाणक्यः -

**आचारः कुलमाख्याति देशमाख्याति भाषणम्।**[1]

इत्थं वाण्या एव भारतीयाः भारतत्वमासाद्य कर्माणि संसाधयन्तः विश्वविख्याताः सञ्जाताः इत्यत्रायं चाणक्यः एव प्रमाणभूतः भवति। भारतीयसंस्कृतौ तथा भारतीयसंस्कृतसाहित्ये च विशदतया वाक्संस्कृतिविषये निगदितं चेदपि तद्विषये शास्त्रीयदृष्टिः न प्रसारिता भारतीयैः। अभिव्यक्तिकौशलकार्यक्रमाः, भाषणकौशलकार्यक्रमाः, वाक्कौशलकार्यक्रमाः इति पाश्चात्यपद्धत्या वाणिज्यरीत्या च यानि नूतनतत्त्वानीति अनुस्त्रियन्ते तानि सर्वाणि अपि भारतीयसंस्कृते भारतीयसंस्कृतौ वा विद्यन्त एव। तत्र आधुनिकसमाजानुगुणं प्रजातान्त्रकतां, सामाजिकतां, व्यावहारिकतां, सांस्कृतिकतां शैक्षिकतां च मनसि निधाय मानववाक्संस्कृतौ वाक्प्रबन्धनं कथं स्यादिति चाणक्य-साहित्यमादाय यथामति कतिपय विचाराः अत्र प्रस्तूयन्ते।

1. **चाणक्यः - वाक्कौशलविचारः -**

वाक्, वाणी, गीः, विद्या इतीमानि पदानि पर्यायवाचकानि एव। अत एव **ब्राह्मी तु भारती गीर्वाग्वाणी सरस्वती** इति अमरः। अत्र उच्यत इति वाक्। वण्यते शब्द्यते इति वाणी। सा सरस्वती एव विद्या। दैवीवागिति अस्याः वाचः संस्कृतभाषायाः च व्यवहारः। वाक्स्थाने विद्येति स्वीकृत्य संस्कृतसाहित्यं परिशीलयामश्चेत् वाचः अस्याः वैशिष्ट्यं जीवने का इति दरीदृश्यते। वाक्प्राप्तये, वाग्वर्धनाय, प्राप्तवाग्रक्षणाय, वागलङ्करणाय च कथमाचरेदिति प्रबन्धनवत् संस्कृतसाहित्ये गदितं वर्तते। यथाहि चाणक्यः- **अनभ्यासे विषं विद्या**[2], **आलस्योपहता विद्या**[3], **अभ्यासाद्धार्यते विद्या**[4], **विद्या योगेन रक्ष्यते**[5],**विद्या मित्रं प्रवासेषु**[6],**वाचः शौचं . . एतत् शौचं परार्थिनाम्**[7] इत्यनेकधा। विद्याविहीनः पशुः इति सुभाषितकारः। तथैव विद्यासहितस्सन् यथार्थतया वाक्संस्कारहीनः पशुरेव भवति।

वागभावेन विद्यया अलंकृतश्चेदपि प्रायः मानवः पशुतुल्य एव भवति। अतः तस्याः वाचः वाक्कौशलस्य वा प्राप्तये आधुनिककाले अभ्यासः, प्रयोगः, आलस्योपहता, योगः, प्रावीण्यं, शक्तिः, अवेक्षणम् इत्यादयः विषयाः अनुसरणीयाः भवन्ति। इत्थं वाक्कौशलस्य औचित्यतां विज्ञायैव राजनीतिशास्त्रविदा चाणक्येन तत्प्रबन्धनविषये तदीयशैल्या जनकल्याणाय स्वसाहित्ये विविधाः वाक्कौशलविचाराः लौकिकरीत्या प्रत्यपादि।

**2. चाणक्यः - वाक्प्रबन्धनविचारः -**

तत्र प्रबन्धनं मानवस्य कार्यकुशलतासम्बद्धं खलु इति विचारः मनसि आयाति। मानवस्य क्रियाकलापाः विविधाः भवन्ति। मानवस्य मानवैः, मानवस्य पशुपक्ष्यादिभिः, मानवस्य स्थावरजङ्गमादिचेतनैः, मानवस्य अचेतनैः इति नानाप्रकारता क्रियाशीलता दृश्यते। अत्र वाक्कौशलस्य तु यः विचारः मानवस्य मानवेन सहैव, स एव मुख्यः प्रसिद्धश्च भवति। सः परस्परवाग्व्यवहारः उत्तमः न भवति चेत् मानवस्य सर्वविधकार्याणि दुःखदानि एव भवन्ति। सामाजिकः, आर्थिकः, सांस्कृतिकः, राजकीयः, संविधानकः, औद्योगिकः, शैक्षिकः, नैतिकः, मौलिकः, पारिवारकः इति नानाविधसामाजिकसंस्थागतक्षेत्रेषु मानवस्य वाग्व्यवहारमुखानि भिन्नानि भवन्ति। ईर्ष्या, कोपः, शत्रुता, प्रियता, तन्यता, बन्धुता, सुस्थिरता, दक्षता, सम्माननं, साफल्यता, विफलता, मैत्री, प्राणरक्षणं, प्राणहानिः, मूर्खता इत्यादि नैकप्रकारकविचारेषु अयं वाग्व्यवहारः आत्मानं सम्बध्नाति प्रभावयति च। अतः विशेषतः वाग्प्रबन्धनात्मकः कश्चन प्रक्रमः मानवजीवने प्राधन्यं भजत एव इति ज्ञायते। **अर्थो नाम भूमिः, मनुष्याणां वृत्तर्वा। तादृश्याः मानवप्रवृत्त्याः भूमेः लाभः पालनादिकं यत्रोच्यते तद् अर्थशास्त्रम्** इति चाणक्योक्तिं स्वीकृत्य प्रवृत्त्यन्तर्गतां वाचं प्रबन्धनदिशा विचार्या वर्तते। मानवेन कार्यसाधनार्थम् उपयुज्यमाना काचित् विशिष्टा कलैव प्रबन्धनमिति प्रबन्धनविदः। नाम्ना नैकप्रकारकाणि प्रबन्धनानि तत्तत्क्षेत्रस्वरूपानुगुणं भवन्ति चेदपि तेषु सर्वेषु अपि वाक् कार्यसाधनाय, कार्यसाफल्यतायै च मानवव्यवहारप्राणभूता गण्यते। अतः प्रबन्धनदिशा वाक्कौशलं कथं स्यादिति चाणक्यः तत्र तत्र विवेयचति।

3. **वाक्संस्कृतेः प्रभावः -**

वाक् प्रत्येकं मानवं स्वरूपसहितं समाजे प्रत्यक्षीकरोति। इयं वाक् ध्वनिरूपेण सङ्केतरूपेण अपि स्वास्तित्वं निरूपयति। परन्तु ध्वनिरूपा वागियं मौखिकी तथा लिखितरूपेति सदात्मानं रञ्जयति एव। **सत्यं ब्रूयाद् प्रियं ब्रूयाद् न ब्रूयात्सत्यमप्रियम्** इति श्रुतिः। **प्राणो वै वागित्यपि** सनातनाचार्याः ऊचुः। तदेव कथयति **सत्यमप्यश्रद्धेयं न वदेत्**[8], **प्रियमप्यहितं न वक्तव्यम्**[9], **अनृतमपि दुर्वचनं चिरं तिष्ठति**[10], **प्रियवादिनो न शत्रुः**[11], **नास्त्यप्राप्यं सत्यवताम्**[12] इत्यनेकधा वदति चाणक्यः। मनसा वाचा कर्मणा इति त्रिधा मानवस्य क्रियाशीलता सर्वदा भवति। वागेतेषां त्रयाणामपि अधारभूता भवति। मनसि यश्च भावः सः वाग्रूपेण बहिरायाति तथा वागनुगुणं च कर्म क्रियते च। **विषामृतयोराकरी जिह्वा**[13] इति चाणक्यसूत्रानुगुणं वाणीयं निश्चितरूपेण विषामृतयोराकरी एव भवति। वाचि यदि विषमता तर्हि मानवजीवनं विषमयं दुर्बलं च भवति। वाचि यदि अमृतत्वं तर्हि मानवजीवने कार्यसिद्धिः निश्चिता सुलभा सरला च भवति। तथा हि कथ्यते चाणक्यः –

**आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः।**
**बकास्तत्र न बाध्यन्ते मौनं सर्वार्थसाधकम्॥**[14]

मुखदोषेण अर्थात् सर्वदा सुमधुरध्वनिं करोतीत्यतः जनैः शुकसारिके पञ्जरे बद्धे क्रियेते। परन्तु ध्वनिं विना स्वकार्यसाधकः बकः जनैः न बध्यते। अर्थात् कदाचित् वाग्विना मौनमेव श्रेयस्करमिति चाणक्यः। अज्ञानवशात्, प्रगल्भत्वात् वा वाक्प्रयोगापेक्षया मौनं मानवाय सर्वार्थसाधकं श्रेष्ठमिति च कथ्यते। इत्थं वाचि वैविध्यता स्यात् न तु सर्वदा एकप्रकारकता इति ज्ञायते।

4. **वाक्संस्कृतौ विश्वसनीयता –**

वाक्कथने वाक्प्रयोगे वाच्छ्रवणे च विश्वसनीयता अवश्यं स्यात्। अल्पमत्या प्रमाणराहित्येन स्वविचारेण च किमपि न वदेत्। **अग्निदाहादपि विशिष्टं वाक्पारुष्यम्**[15] इति चाणक्यः कथयति। मौखिकं लिखितं वा वाक्पारुष्यं हानये एव भवति। कठिनरूपेण वाक्प्रयोगः न कर्तव्यः। उपायः कश्चन कथ्यते चाणक्येन यत् –**त्रयाणामेकवाक्ये**

**सम्प्रत्ययः**[16] इति। अर्थात् त्रयः ततोऽप्यधिकाः वा यदि एकस्यां वाचि सहमतिं प्रदर्शयन्ति, तर्हि तस्याः प्रयोगः श्रेष्ठः इति। इत्थं निर्णयं स्वीकृत्य विश्वासपुरस्सरं वाक्प्रयोगः क्रियते चेत् लोकप्रियता अवश्यं भवत्येव।

**शास्त्रपूतं वदेत् वाक्यं मनःपूतं समाचरेत्।**[17]

वाक्यं सदा शास्त्रवाक्यमिव स्यात्। अत्र शास्त्रपूतं नाम शास्त्रे विद्यमानं वाक्यमिति न। यच्च वाक्यं कथ्यते तत्तु शिष्टवाक् विशिष्टा च स्यात्। उत्तमता समीचीनता च वाक्कथनसमये प्रदर्शनीया, लीलया भावनया किमपि कथनाय न व्यवहरेदित्यपि ज्ञायते॥ **राजद्विष्टं न वक्तव्यम्**[18]इति सूत्रेण विश्वसनीयता वाचि स्यादिति चाणक्यः। यमुद्दिश्य वयं कथयामः, तद्विरुद्धतया तु कदापि न वदेत्। विधिनिर्वहणे, उत्तरदायित्वनिर्वहणे च तदधिगतः व्यक्तिः समादरणीय एव भवति। तमनुसृत्यैव तदनुकूलतया च विषयप्रतिपादने सक्षमता प्रदर्शनीया। आधुनिककाले तु सर्वक्षेत्रेषु स्वार्थपरास्सन्तः वैय्यक्तिकावधानिनः सन्तश्च परस्परं वाचि गौरवभावं न प्रदर्शयन्तः कलहप्रियाः दृश्यन्ते। तथैव कथ्यते हि यत्- **भर्त्रादिकं रहस्युक्तं वक्तुमिच्छन्त्यबुद्धयः**[19]इति। उद्योगक्षेत्रेषु सदस्याः सर्वदा नियमित-वाक्कौशलात्मकाः स्युः। स्वामिनः संस्थायाः वा गुप्तवाक्यानि कदापि अन्येभ्यः न सूचनीयानि भवन्ति। परन्तु आधुनिकक्षेत्रेषु तादृशः विश्वासिनः एव कर्मकुशलाः न विद्यन्त एव।

**5. वाक्संस्कृतौ बहुभाषिता -**

**"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा"** इत्युक्तिस्तावत् गीर्वाक् वाणी इयं संस्कृतभाषा एव आद्या भारतीया इति प्रमाणयति। पुरा सा एका संस्कृतभाषा लोकभाषा, मातृभाषा, ग्रन्थभाषा तथा शासनभाषा चासीत्। तस्मात् कारणात् सामाजिकैः जनैः अन्यासां भाषाणामावश्यकता नानुभूता। परन्तु अधुना तु जनसमाजः वैज्ञानिकः, नैक-प्रकारकसंस्कृतिसम्मिलितश्च वर्तत इत्यतः बहुभाषिता अनिवार्या लक्ष्यते। एकया वा भाषया समाजस्थस्य कस्यापि जनस्य व्यवहारः न दृश्यते। सामाजिकः सामान्यः जनः अपि लौकिकनैकविधवाच्छक्त्या विशिष्टः दृश्यते। अतः शिष्टैः जनैरस्माभिरपि औद्योगिक-क्षेत्रे वाचि बहुभाषिता समार्जनीया भवति। विषये अस्मिन् कथयति चाणक्यः यथा -

**गीर्वाणवाणीषु विशिष्टबुद्धिस्तथापि भाषान्तरलोलुपोऽहम्।**
**यथा सुराणाममृते स्थितेऽपि स्वर्गाङ्गनानामधराऽऽसवे रुचिः॥**[20]

अत्र दृष्टान्तः मनोरञ्जनात्मकश्चेदपि लोकोक्तिस्तावत् सार्वजनिका विद्यते। भाषालोलुपाः वाग्लोलुपाः अवश्यं सर्वे भवेयुः। विभिन्नाः वाग्रीतयः अपि मानवं विशेषस्थानप्राप्तये हेतवः भवन्ति। वाचि भाषान्तरकारणात् छात्रः शिक्षकः सामान्यजनो वा विशिष्टबुद्धियुतस्सन् विश्वे सुप्रसिद्धः भवितुमर्हतीति चाणक्यः।

**6. वाक्संस्कृतौ व्यावसायिकता-**

मानवः जन्मारभ्य एव वाग्व्यापाराय प्रयतते। तत्र यत्रौपचारिकता, व्यावसायिकता भवति तत्र कार्यसिद्धिः तदधीने वर्तते एव। मानवसम्बन्धेषु नैकेषु वाक्संस्कृतौ यदि व्यावसायिकता भवति तर्हि ते सम्बन्धाः दृढाः एवेति कथने नातिशयोक्तिः। **कार्याकार्य-तत्त्वदर्शिनो मन्त्रिणः**[21]इति चाणक्यः। वाचा किं वक्तव्यं, किं न वक्तव्यं चेति प्रत्येकं कर्मणि मानवः चिन्तयेत्। परिस्थितिरपि तत्र अवबोधनीया गणनीया भवति। **शास्त्रज्ञोऽप्यलोकज्ञो मूर्खतुल्यः**[22]इति चाणक्यकथनेन वाग्व्यवहारे लोकज्ञता अनिवार्या इति ज्ञायते। **सर्वज्ञता लोकज्ञता**[23]इति वाक्कौशले अपि सम्पादनीये। वाग्मी स्यान्न तु वाचालः जल्पो वा। वागारम्भे वाक्समाप्तौ च व्यावसायिकता स्यात्। अतिक्रमः कुत्रापि न योग्या। आदेशज्ञः वागनुपालकश्च स्यात् वक्ता। अत एव कथयति चाणक्यः **कथनानुरूपं प्रतिवचनम्**[24], **प्रश्नानुरूपं प्रतिवचनम्**[25]इति। अर्थात् वाचि सदा आनुशासनिकता स्यादिति सुस्पष्टतया चाणक्यः अस्मान् सूचयति।

**7. वाक्संस्कृतौ शिष्टाचारः सभ्यता च -**

आधुनिककालेशिक्षेयं शिष्टाचाराय संस्कारवर्धनाय चेत्यतः नियमितशिक्षाव्यवस्था कल्पिता वर्तते। औपचारिकशिक्षाव्यवस्थया अनया सः शिष्टाचारः सभ्यता वेह जनव्यवहारे न दृश्यत इत्यतः नवशिक्षानीतौ संस्कृतविषये, संस्कृतिविषये च कथयन्तः शिष्टाचारविषये बहुधा शिक्षाविद्भिः प्रोक्तं विद्यते। विशिष्य शिक्षासंस्थासु शैक्षिकजनास्सर्वे सभासु एव परस्परमारोपयन्तः कलहायमानाः इव व्यवहरन्तः दृश्यन्ते। सन्दर्भे अस्मिन्

छात्रव्यवहार अपि अव्यावहारिक इव एधमानः दृश्यते। विचारे अस्मिन् **यः संसदि परदोषं शंसति सः स्वदोषबहुत्वमेव प्रव्यापयति**[26] इति चाणक्यस्य शिष्टाचारवाक् आदर्शभूता भवति। सभासु सर्वसामान्यतया वाचालाः नियन्त्रणरहिताः च भवन्ति जनाः। तदतिरिच्य केचन स्वयं कल्पयन्तः बहुधा मनस्येकं वचस्येकं कर्मण्येकं चैव व्यवहरन्ति। तेषां समेषामपि वागत्र स्वमूर्खतां एव निरूपयतीति चाणक्यः। **मूर्खेषु विवादः न कर्तव्यः**[27], **मूर्खेषु मूर्खवत्कथयेत्**[28], **नीचस्य विद्या नोपेतव्या**[29], **म्लेच्छभाषणं न शिक्षेत**[30], **म्लेच्छानामपि सुवृत्तं ग्राह्यम्**[31], **शत्रुं न निन्देत सभायाम्**[32]इत्येतैः सूत्रैः वाचि शिष्टता सभ्यता आनुशासनिकता च कालदेशपरिस्थित्यनुगुणमवश्यं स्यादिति कथयति चाणक्यः।श्रोता कीदृशः इति ज्ञात्वा वक्ता स्वीयवाक्प्रयोगं कुर्यात्। मूर्खैस्तावत् वागालप एव न करणीय इति निश्चितं वदति चाणक्यः। यदि कदाचित् बालकादपि सुभाषितम् इति यथा तथैव मूर्खादपि सुवृत्तं चेदवश्यं ग्राह्यमेव भवतीति निर्दिशति।

**8. वाक्संस्कृतौ लज्जाप्रदर्शनम् –**

लज्जा काचित् मानसिकप्रवृत्तिः भवति न तु वाचिकप्रवृत्तिः। सदा सर्वदा च मानवैः स्फुटं, स्पष्टं, शुद्धं च वाक् प्रयोक्तव्या भवति। लज्जास्वभावस्तु स्वाभाविकतया स्त्रीणां कश्चन सद्गुण एव। परन्तु कालविशेषत्त्वात् मानवव्यवहारेषु नैके गुणाः नैकप्रकारकरूपेण परिवर्तिताः। तथापि वाचि लज्जाप्रदर्शनं तु दुर्गुणः एव भवति। सामाजिकक्षेत्रे विशेषतया वाचि लज्जता स्त्रीणां भवति। परन्तु साम्प्रतिककाले सर्वक्षेत्रस्थजनानां व्यवहारे विषयनिष्ठतायाः, कार्यदक्षतायाः वा अभावात् सर्वविधकार्येषु लज्जता प्रदश्यर्माना दृश्यते। वाचि लज्जा प्रदर्शनं कार्यसाधने निम्नतां वा असमर्थतां प्रदर्शयति। अतः लज्जा न प्रदर्शनीया।

**लज्जावतः कुलीनस्य वित्तं याचितुमिच्छतः।**
**कण्ठे पारावतस्यैव वाक्करोति गतागतम्॥**[33]

**9. वाक्संस्कृतौ कृपणता -**

सामान्यतया वचांसि **वज्रादपि कठोराणि मृदूनि कुसुमादपि** इति वदति

सुभाषितकारः। वचांसि मृदूनी कठिनानि वा तत्र कृपणता अथवा प्रार्थना विशेषतया विद्यते चेत् तत्कार्यमवश्यं सिद्ध्यति। अतः नम्रता विनयः कृपा वा वाचि स्यादिति चाणक्यः। कथयति यत्-

**भास्करोऽपि यदि ब्रूयाद् देहीति कृपणं वचः।**
**दीप्तौ रश्मिसहस्रेण सोऽपि शीतलतां वृजेत्॥**[34]

कठिनकार्येषु शारीरिकबलप्रदर्शनापेक्षया कृपणतापूर्वकमुखवाणी प्रयोक्तव्या भवति। तेन वाक्येन कठिनः अपि अधिकारी कोपरहितस्सन् कार्यानुकूलो भवतीति कथ्यते।

10. **वाक्संस्कृतौ शङ्कनीयता -**

बहवः जनाः भीत्या, शङ्कया, सन्देहेन, भ्रमया, संशयेन, परिचयाभावात् वा शङ्कात्मकरूपेण वाक् प्रकटयन्ति। तदा ध्वनिः न भवति। वाचि स्पष्टता अपि न भवति। तदपेक्षया अन्यः न श्रृणुयादिति कारणात् दूरादेव मन्दं मन्दं भाषन्ते। तादृशाः सर्वदा शङ्कनीया इति चाणक्यः। अतः ज्ञायते दूरात् मृदुतया मन्दतया वा न भाषेत इति।

**य एव राजन् मृदुमन्दभाषी स एव दूरात् परिशङ्कनीयः॥**[35]

यः व्यक्तिः शनैः शनैः मृदुतया भाषते तस्य वाणी शङ्कनीया एव भवति। यतः यश्च कृतापराधी भवति सः एव स्वात्मरक्षणाय इत्थमाचरति। अपराधभावः न भवति तर्हि सः धैर्येण गम्भीरतया च शनैः शनैः निश्चप्रचं वदेत्।

11. **वाक्संस्कृतौ प्रसन्नता -**

मुखे प्रसन्नता सर्वकार्यसाधिकैव इति सर्वे समामनन्ति। मुखे कठोरता कस्यापि कार्यस्य फलप्रदायिनी न भवति। कदाचित् सन्दर्भानुगुणं तत्कालिकं कार्यं साधयितुं स्यादेव। परन्तु शाश्वतरूपेण कर्मणः व्यक्तेः वा प्रसन्नतैव मोक्षप्रदायिनी भवति। अतः कथ्यते चाणक्येन -

**किं किं नोपकृतं तेन किं न दत्तं महात्मना।**
**प्रियं प्रसन्नवाक्रेण प्रथमं येन भाषितम्॥**[36]

 ISSN : 2277-2359

इत्थमस्मान् चाणक्यः सूचयति यत्- कार्यारम्भे प्रसन्नाननेन वागुक्त्वा कार्यमारभेदिति। यश्च प्रसन्नवदनेन वाक् वदति, तस्मै स्वकार्यसम्पादनाय न अन्यत् किमपि आवश्यकं भवति।

12. **वाक्संस्कृतौ मूल्याकलनम्** -

मानवानां सर्वेषु कार्येषु ज्ञानं तु अत्यावश्यकमेव। तथैव कार्यस्य साधनाय पूर्वसिद्धता अपि अपेक्षिता भवति। कार्यारम्भे, कार्यकरणे. कार्यानन्तरं वा यः स्वकार्यस्य मूल्याकलनं करोति सः कालान्तरे सर्वदा सर्वत्र सफलतामेव प्राप्नोतीति शिक्षाविदः। तदनु कथयति चाणक्यः यत्- श्रोतृणामपि क्षमता मूल्याङ्कनं कृत्वा वदेत इति। यथाहि -

**अन्तःसारविहीनानामुपदेशो न जायते।**
**मलयाचलसंसर्गात् न वेणुश्चन्दनायते॥**[37]

ये च अवबोधनक्षमारहिताः जनाः भवन्ति, तेषां समक्षे वाक्प्रयोगः व्यर्थः भवति। वाक्प्रयोगे स्वप्रतिभैव सदा न योग्या। यश्च श्रोता भवति तस्यापि प्रतिभा अमूल्या भवति। तथैव कथयति -

**हे जिह्वे कटुकस्नेहे मधुरं किं न भाषसे।**
**मधुरं वद कल्याणि। लोकोऽयं मधुरप्रियः॥**[38]

भाषणावसरे आदौ कश्चन मानसिकसङ्कल्पः दृढः स्थापनीयः। लोकप्रियता तु मधुरे सदा भवतीत्यतः मधुरवाक्कथनाय सदा प्रयतेत। तदर्थं सन्नद्धता एव करणीया भवति। आत्मावलोकनमपि करणीयं भवति। तथैव कार्याणां साफल्यता वागनुसृत्यैव सदा इति ज्ञात्वा मम जिह्वया तु विषकरं न वक्तव्यमिति सङ्कल्पवान् स्यात्। यतः कथ्यते -

**जिह्वाग्रे वसते लक्ष्मीः जिह्वाग्रे मित्रबान्धवाः।**
**जिह्वाग्रे बन्धनं चापि जिह्वाग्रे मरणं ध्रुवम्॥**[39]

पठनपाठनयजनयाजनोपदेशानुदेशनप्रवचनोपन्यासादिषु यदि प्रियवाक्यता भवति तेषां कृते लक्ष्मीकटाक्षस्तु प्रत्यक्षः एव, अपि च मित्राणि बान्धवाः, आदरजनाः, स्नेहशीलाः, प्रेमिणः, अनुयायिनश्च निश्चप्रचमेव। एतद्यो न जानाति तस्मै इह किमपि न

लभ्यते। कदाचित् मरणमपि आपतेत। प्रियभाषणेन सर्वं सिद्ध्यतीति कथिते सति विपरीतं यदि आचर्यते तेषां दुर्गतिरवश्यमेवेति ज्ञायते। तदेव कथयति चाणक्यः -

**अत्यन्तकोपः कटुका च वाणी दरिद्रता च स्वजनेषु वैरम्। . . . चिह्नानि देहे नरकस्थितानाम्॥**[40] **इति।**

13. **वाक्संस्कृतौ त्याज्यांशाः** - तत्र

**मर्मगतवाक् न प्रयोक्तव्या** -

परस्परस्य मर्माणि ये भाषन्ते नराधमाः।
त एव विलयं यान्ति वल्मीकोदरसर्पवत्॥[41]

वाक्कौशले सति बहवः जनाः दुर्बुद्ध्या तमोगुणैः सह व्यवहरन्ति। मनसः दुःखोत्पादनपूर्वकं वाक्यानि ये कथयन्ति ते कालान्तरे स्वयं विनश्यन्ति। यतः तादृशान् जनान् तु समाजे ये केऽपि न इच्छन्ति मिलन्ति च। तथा वास्तविकवाक्संस्कृतिः द्वाभ्यामपि नश्यति। अतः वाक्संस्कृतेः संवर्धनाय मर्मभाषणं त्यजेद्।

**असम्भवं न प्रयोक्तव्यम्** -

असम्भवं न वक्तव्यं प्रत्यक्षमपि दृश्यते।
शिला तरति पानीयं गीतं गायति वानरः॥[42]

केचन स्वलाभाय, परहानये, निर्दिष्टलक्ष्यसाधनाय च ऊहातीतम्, असम्भवं च कथयन्ति। तत्तु समेषां समयनाशाय तथा श्रमवर्धनाय चैव भवति। कार्यसिद्धौ तादृशी वाक् कस्मै अपि उपयोगाय न भवतीत्यतः त्यजेदयं विचारः।

14. **वाक्संस्कृतेः वर्धनोपायाः** -

**प्रस्तावसदृशं वाक्यं** [43]**,यावत्सर्वजनानन्ददायिनी वाक् प्रवर्तते**[44]**, आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्**[45]इत्थं नैकान् उपायान् संसूचयन् चाणक्यः कथयति यत्- प्रतिदिनं जनास्सर्वे स्ववाक्कौशलवर्धनाय निश्चितरूपेण उत्तमग्रन्थाध्ययनं कुर्युरिति। अक्षरस्य पदस्य श्लोकस्य अर्धश्लोकस्य वाक्यस्य वा पठनपुरस्सरं चिन्तने मनने विचारे च सदा निरताः भवन्ति चेत् तेषु वाक्कौशलं तथा वाग्व्यवहारः च वर्धत इति सारः। सा वाक् सहजतया

स्वयं सिद्ध्यति चेत् वरमित्यपि कथयति यत् - **दुर्लभा प्रकृता वाणीति**। सर्वदा यान्त्रिकता कण्ठस्थीकरणं वा न स्यादिति भावः। तथैव काले अस्मिन् सत्यवाक्कथने जनाः सिद्धाः न भवन्ति। तथा च प्रियवगपि दुर्लभा एव। संस्कृतज्ञैः अस्माभिः लोकतत्त्वमिदं विज्ञाय वाक्संस्कृतौ मधुरता प्रियता समानेतव्या एव। तदर्थं सज्जनसङ्गतिः सदा सर्वथा, सर्वधा च योग्येति कथ्यते। यथाहि -

**सुभाषितं च सुस्वादु सङ्गतिः सुजने जने।**[46] **इति।**

**उपसंहारः -**

वाक्प्रियता प्रियवक्तृत्वं वा वस्तुतः भारतीयज्ञानपरम्परायां पारिवारिकजीवने वा सहजगुणत्वेन गणितः। परन्तु आधुनिकभारतीयसमाजे पाश्चात्यसंस्कृतेः कारणात् अभ्यासादेव सर्वमार्जनीयं सञ्जातम्। भारतीयसंस्कृतौ गण्यमाणेषु त्रिषु रत्नेषु सुभाषितमपि अन्यतममेव। सुभाषितं नाम भर्तृहरेः सुभाषितमेव न। प्रत्येकं मानवस्य वागित्यपि गणयेत्। इयं सुवाक् संस्कृतस्य तथा भारतीयसंस्कृत्याश्च आदर्शपूर्णा स्यात्। यावती वाक्सम्पत्तिः मानवाधीना भवति, तावती लोकप्रियता, कार्यदक्षता, सार्वजनिकता, जीवने वैयक्तिकप्रगतिः च निश्चिता भवति। आधुनिककालानुगुणं सर्वक्षेत्रस्थजनानां कृते अपेक्षितवाक्कौशलपद्धतिं सूचयति चाणक्यः यथा -

**गीर्वाणवाणीषु विशिष्टबुद्धिस्तथापि भाषान्तरलोलुपोऽहम्।**
**यथा सुराणाममृते स्थितेऽपि स्वर्गाङ्गनानामधराऽऽसवे रुचिः॥**[47]

अर्थात्कालदेशपरिस्थित्यनुगुणम् अपेक्षिताः भाषाः, वाग्विशेषाः अभिज्ञातव्याः इति चाणक्यः। वाक्कौशलमेकं मानवं सुचारुरूपेण, उत्तमजीवनाय मार्गप्रदर्शिनी इति कथने नातिशयोक्तिः। यदि वाचा **कश्चन वक्ता, परचित्तोपलक्षकः, यथोक्तवादी, ज्ञानविज्ञानसम्पन्नः, वाक्पटुः सत्यवादी, सर्वशास्त्रार्थतत्त्वज्ञः, लिपिज्ञः** च भवतिस्म सः राज्ञः लेखकः भवतीति कौटिल्यः। एतदनु यदि छात्राः वाक्पटवः भविष्यन्ति, ते भारतदेशमन्त्रिवर्याणां लेखकाः, पाठकाश्च भवितुमर्हन्ति। इत्थं या वाक्संस्कृतिः

 ISSN : 2277-2359

सनातनभारते आसीत् साधुना पुनरानेतव्या भवतीति, तदर्थं वाक्कौशलविचाराः शास्त्रीयरीत्या छात्रदृष्टौ समुपस्थापनीया इति।

इत्थं सूक्ष्मेक्षिकतया पश्यामश्चेत् चाणक्यसाहित्ये नैके वाक्कौशलसंस्कृतेर्वर्धनाय प्रबन्धनात्मकाः विचाराः उपलभ्यन्त एव। अनुसन्धानरीत्या शैक्षिकोपयोगं च मनसि संस्थाप्य प्रायोगिकपद्धत्या एतान् विचारान् यदि शिक्षाक्षेत्रेषु पाठयामश्चेत् छात्राः सर्वे उत्तमनागरिकाः भवन्तीति कथने नातिशयोक्तिः।अनेन वाक्कौशले पुनः भारतीयसंस्कृतिरपि अवश्यमेव मानवव्यवहारे समागच्छेच्च। अतः नवशिक्षानीतौ(NEP) प्रतिपादितविचारान् मनसि निधाय छात्रेषु सामाजिकप्रजातान्त्रिकशैक्षिकगुणान् सम्पादयितुं चाणक्यस्य साहित्यात् न्यूनातिन्यूनं **चाणक्यसूत्राणि इति ग्रन्थः**समेषां छात्राणां कृते पाठ्यविषयत्वेन समायोजनीय भवतीति शम्।

**पादटिप्पणी –**

1. वृद्धचाणक्यः2.13.
2. वृद्धचाणक्यः4.15.
3. वृद्धचाणक्यः4.17.
4. वृद्धचाणक्यः4.18.
5. वृद्धचाणक्यः5.19.
6. वृद्धचाणक्यः4.17.
7. वृद्धचाणक्यः 7.20.
8. चा.नी.सू.155.
9. चा.नी.सू. 428
10. चा.नी.सू.441.
11. चा.नी.सू.445.
12. चा.नी.सू.133.
13. चा.नी.सू.438
14. ल.चा.2.3
16. चा.नी.सू.32
17. वृद्धचाणक्यः 10.2
18. चा.नी.सू.442
19. चा.नी.सू.199
20. वृद्धचाणक्यः10.18.
21. चा.नी.सू.32
22. चा.नी.सू.544.
23. चा.नी.सू. 543
24. चा.नी.सू. 322
25. चा.नी.सू. 322
26. चा.नी.सू. 131
27. चा.नी.सू. 221
28. चा.नी.सू. 222
29. चा.नी.सू. 294
31. चा.नी.सू. 296
32. चा.नी.सू. 536
33. चा.रा.नी.शा 8.100
34. चा.रा.नी.शा 8.80
35. चा.रा.नी.शा 6.45
36. चा.रा.नी.शा 6.36
37. वृद्धचाणक्यः 10.8
38. चा.सा.सं.2.11
39. चा.सा.सं. 2.12
40. वृद्धचाणक्यः 7.17
41. वृद्धचाणक्यः 9.2
42. चा.नी.शा.87
43. वृद्धचाणक्यः 14.15
44. वृद्धचाणक्यः 14.18

15.चा.नी.सू.56

30.चा.नी.सू. 295

45.वृद्धचाणक्यः 7.2

46.वृद्धचाणक्यः 16.18

47.वृद्धचाणक्यः10.18

**परीशीलितग्रन्थसूची -**


1. डा.आर पी पाठक, भारतीय परम्परा में शैक्षिक चिन्तन, नागपुर, कनिष्क पब्लिशर्स&डिस्ट्रीब्यूटर्स, 2008, हिन्दी.
2. डा.श्रीकृष्ण सेमवालः, डा.प्रवेश सक्सेना, चाणक्यसूत्रम्, दिल्ली, संस्कृत-अकादमी, 2007-2008, हिन्दी.
3. श्री. आ.रा. पञ्चमुखी, चाणक्य सम्पुट, दिल्ली, सञ्जय प्रकाशन, 2016, हिन्दी.
4. J. C Aggarwal, Vinod, *School management and pedagogies of education*, pustak mandir, Agra-2, 2006, English.
5. Dr. R.N.Sharma, *Educational administration management and organization*, Agra-2, Surjeet publications, 2008. English.

# अद्वैतदर्शने प्रतिपादितः तम इति प्रतीकः

डा. सन्तोषः सि.आर्
सहायकाचार्यः, श्रीनारायणगुरुविद्यालयः
चेलन्नूर्, कोषिक्कोड्

अद्वैतशास्त्रे सत्, असत्, सदसदुभयविलक्षणमिति त्रयाणां प्रमेयानां निरूपणं दृश्यते। प्रकाशः, वन्ध्यापुत्रः, शुक्तिरजतमिति त्रयः प्रतीकाश्च प्रमेयानामेतेषां प्रतिपादनाय यथाक्रमं दृष्टान्ततया सन्ति। तेषु असत् त्रिकालेष्वपि नास्तीति तद्रूपकस्य प्रतिपादनं न विस्तरेण विहितमद्वैतदर्शने। सत्तु सर्वथा अबाध्यमिति तस्यैव प्रतिपादनमस्ति पारमार्थिकतत्त्वावेदकप्रमाणस्य वेदान्तस्य मुख्यलक्ष्यम्। व्यवहारकाले जिज्ञासूनां मनसि किं सत् किं वासदिति नित्यानित्यात्मकं तत्त्वज्ञानं सामान्यतः अस्त्यपि विशेषतया नास्ति। परमार्थतः असद्रूपमात्रमपीदं सद्वस्तुवत् प्रतीयमानं व्यावहारिकं जगत्स्वयं प्रतीयते कदाचित् बाध्यत इति भावाभावविलक्षणतया तत्स्वरूपं अद्वैते निरूपितम्। विश्वस्वरूपमिदं सदसदुभयविलक्षणमिति अनिर्वाच्यं अस्ति। सूक्ष्मतः पर्यालोचिते सत्त्वेन अवभासितमपि इदं दृश्यस्वरूपं असन्मात्रमिति अद्वैतिनां उत्तमः सिद्धान्तः। तत्त्वबोधोदये सञ्जाते अस्यैव द्वैतात्मकजगतः मिथ्यात्वं (असत्त्वं) विज्ञाय अद्वैतसिद्धिं साधयति अद्वैती। अनुभूतं शुक्तिरजतं ज्ञानोदये सति वन्ध्यापुत्रवदलीकं सञ्जायते। अन्ततो गत्वाकाशकुसुमवत् असद्रूपमात्रं एवेदं जगत्स्वरूपमिति विज्ञाय, किन्त्वस्य प्रतीतिगोचरत्वाभ्युपपत्या च आत्मविवर्तस्य वा अविद्यापरिणामस्य वा दृश्यस्य शुक्ति-रजतवत् सदसद्भ्यां विलक्षणत्वमभिमतम्। विलक्षणत्वमिदं अविद्यालक्षणे जगत्कारणेपि सम्पश्यन्नविद्यां महाद्भुता अनिर्वचनीयरूपा इत्यद्वैती लक्षयति। सत्त्वेन असत्त्वेन सदसत्त्वेन वा निरूपयितुं अशक्यमिति कृत्वास्ति अविद्यायाः तत्कार्यस्य च सदसद्विलक्षणत्वलक्षणं अनिर्वचनीयत्वम्।

व्यवहारकाले सदात्मना प्रतीयते अपि सदा विकार्यमाणः आविद्यिकप्रपञ्चः आत्मबोधात् बाध्यते इति न परमार्थसन्। वस्तुतः असन्नपि प्रतीतिगोचरः भवत्ययं प्रपञ्चः

इति नायमत्यन्तासंश्च। किञ्चिद्भावात्मकत्वं अविद्यायां अनुभूयते। प्रतीतिगोचरत्वे सति बाध्यत्वं विश्वस्वरूपेस्ति। यथा मृद्विकाराश्च सर्वे मृन्मयाः तथा अविद्याकार्य्राश्च समे अद्वैते अविद्यापदार्थान्तर्भूताः। अविद्यातत्कार्ययोर्मध्ये स्वरूपे भेदः नास्ति। शुक्तिरेव रजतवत् यद्वत् प्रतीयते तथा अधिष्ठानसत्तैव अविद्यावत् दृश्यत इति त्रिकालेष्वपि आरोपितस्य शून्यत्वं आपद्यते। अभावः अधिकरणात्मक इति इदं विश्वशून्यत्वं शाश्वतीं आधारसत्तामेव अत्यन्ततो सूचयति। परमार्थसत्तैव व्यवहारकाले सदसदुभयविलक्षणतया अविद्यातः इन्द्रियगोचरायते।

अविद्यायाः प्रतीकोस्ति अद्वैतदर्शने तमः। अज्ञानं आत्मावरणमिति तम इत्युच्यते। तदेव च मरणहेतुत्वात् मृत्युरित्यपि उपनिषत्सूच्यते। तमसो मा ज्योतिर्गमय, मृत्योर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत् सदमृतं मृत्योर्मामृतं गमयामृतं वा इति श्रुतिरत्र स्मर्तव्या। तमो भावरूपः पदार्थः न तु अभावरूपः (तेजसोऽभावः) इति अद्वैताभिप्रायः। यतो हि भावात्मकस्याज्ञानस्य प्रतीकम् अस्ति तमः। अज्ञानं तु सदसद्भ्यां अनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्ति अहमज्ञ इत्याद्यनुभवात् इति वेदान्तसारनिहितं अज्ञाननिर्वचनं तस्य भावात्मकत्वं प्रदर्शयति। तर्कदर्शने तेजसोऽभावस्तम इति प्रोच्यते। अविद्या च तमोरूपा। सा च द्रव्यान्तरमिति अद्वैतिनां सिद्धान्तः। आलोकवदेव भावरूपज्ञानतमसः विरोधी स्वप्रकाशात्मा स्वतः जगदिदं प्रकाशयतीति तस्य ज्योतिःपदवाच्यत्वं चाद्वैते प्रसिद्धम्। आत्मप्रकाशादस्ति समस्तदृश्यानां अवगतिः। आत्मनः एव प्रकृष्टप्रकाशात् अस्ति अस्यैव दृश्यजालस्य बाधश्च। एवं आधारः आरोपितश्चात्मनैव प्रकाश्यते।

**तमसः भावस्वरूपत्वम्**

शारीरकभाष्ये तमः अविद्यादृष्टान्तत्वेन प्रतिपादितमस्ति। तथाहि श्रीशङ्करेण, युष्मदस्मत्प्रत्ययगेचरयोः विषयविषयिणोः तमःप्रकाशवत् विरुद्धस्वभावयोः इत्यादिना भाष्येण आत्मानात्मनोः वैरुध्यं अध्यासभाष्ये प्रदर्शितम्। अविद्या हि अज्ञानम्। अनादित्वे सति भावरूपं विज्ञाननिरस्यं अज्ञानमिति तल्लक्षणं अद्वैते प्रायः स्वीकृतम्।

भावरूपाज्ञानदृष्टान्तोपात्तं तमश्च दार्ष्टान्तानुरोधेन भावरूपमेव भवेत्। तमःप्रकाशौ परस्परविरुद्धौ। सामान्यतः नहि विरुद्धयोः निसर्गतः एकत्र सहावस्थितिः अस्ति। पद्मपादेनोक्तं यदि तावत् सहानवस्थानलक्षणो विरोधः, ततः प्रकाशाभावे तमसो भावानुपपत्तिर्भवेत्। तदसत्। दृश्यते हि लोके, मन्ददीपे वेश्मनि अस्पष्टं रूपदर्शनं इतरत्र च स्पष्टम्। तेन ज्ञायते मन्दप्रदीपे वेश्मनि तमसोपि ईषदनुवृत्तिः अस्तीति। तथा छायायामपि औष्ण्यं तारतम्येन उपलभ्यमानं आतपस्यापि तत्रावस्थानं सूचयति। प्रकाशवदधिकरणेपि तमसः प्रतीत्या नालोकाभावः तमः स्यात्। तेनात्र तमःप्रकाशयोः परस्परानात्मतालक्षणो विरोधः युक्तः। एषः विरोधः एव शङ्कराभिमतः इति पद्मपादस्य अभिप्रायः। ततः तमसः प्रकाशस्वरूपत्वं प्रकाशस्य तमस्स्वरूपत्वञ्चानुपपन्नम्। तद्दृशविरोधादेव तयोः इतरेतरभावानुपपत्तिः उपपद्यते।

सद्रूपत्वासद्रूपत्वधर्मविधुरमस्ति अविद्यास्वरूपम्। नहि तस्याः सदात्मकत्वं, असदात्मकत्वं सदसदुभयात्मकत्वं वा स्वरूपम्। यदि सत्त्वमात्रञ्चेदस्याः स्वरूपं, न सा ज्ञानान्निवर्तेत। यदि तत्स्वरूपं असत्त्वमात्रञ्चेन्नानुभूयेत। किन्तु ज्ञानादज्ञानं निवर्तते, अविद्यात्मकं जगदिदमवभासते च। अविद्यया आत्मनि अध्यासः, अध्यासात् तस्य विषयानुभवः इति अद्वैतराद्धान्तः। सदसद्विलक्षणस्याज्ञानस्य निदर्शनं तमश्च तद्वदुभयवलक्षणमस्ति, नाभावमात्रम्।

अज्ञानं तत्कार्यं जगच्च अलीकमेवेति प्रौढः अद्वैतवादः। किन्तु अज्ञानतत्कार्याणां व्यावहारिकं भावत्वं अद्वैते यावदात्मज्ञानं आविद्यकानां अभिमतम्। ततः तमसोपि प्रतीतिविषयरूपं व्यावहारिकं भावत्वं (सत्तावत्वं) व्यवहारकालपर्यन्तं युक्तम्। तदभिहितं प्रत्यग्स्वरूपेण, भावाभावातिगाविद्यातत्त्वे दृष्टान्तितं तमः, वृद्धैस्तदस्य भावत्वं वादेनानेन साध्यते इति। एवं दार्ष्टान्तानुरोधेन भाववस्त्वस्ति तमः इति अद्वैते निरूपितम्।

**तर्कदर्शनाभिमतं तमसः अभावस्वरूपत्वम्**

तमः अभावस्वरूपं- आलोकाभावमात्रं - इति तार्किकवैशेषिकयोरभिप्रायः। रूपदर्शनाभावमात्रं तमः इति प्राभाकरमीमांसकानां विचारः। तेषां मते भावत्वं किमिति

प्रथमं ज्ञातव्यम्। न्याये द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणषड्पदार्थान्यतमत्वं हि भावत्वम्। तदन्यतमत्वं व्यावर्तमानं भावत्वमपि व्यावर्तयति। षड्पदार्थानां मध्ये पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि भवन्ति नवद्रव्याणि। तमसः नवद्रव्येषु अन्यतमत्वे इदं तमः तेष्वेकं स्यात्। तथा तावद्गुणवत्वञ्च तत्र स्यात्। यस्मिन् यस्य अन्तर्भावो अभिमतः तस्य यावन्तो गुणाः तावद्गुणवत्वं अन्तर्भूते च भवेत्। नवद्रव्येषु आकाशकालदिगात्ममनांसि भवन्ति नित्यद्रव्याणि। तेष्वन्यतमत्वे तमः आलोकान्न निवर्तेत। नातः तमः नवद्रव्येष्वन्तर्भवतीति तर्कदर्शनम्।

न तमः नवद्रव्यभिन्नं द्रव्यान्तरम्। गुणवत्वं हि द्रव्यस्य लक्षणम्। तमसः निर्गुणत्वात् तन्न द्रव्यान्तरम्। यद्यपि तमः नीलमिति महत्वगुणयुक्तमिति च प्रतीयते, तस्मात्तस्य गुणवत्त्वात् द्रव्यान्तरत्वशङ्का स्यात् तथापि गन्धादेः व्यापकस्य निवृत्तौ श्यामरूपं व्याप्यमपि तस्मान्निवर्तत इति तर्काभिप्रायः। यस्मात् गन्धादिव्याप्यं हि श्यामरूपं यथा पृथिव्याम्। वादार्थं तमसि दशमद्रव्यत्वाङ्गीकारेपि द्रव्यान्तरं तत् निरवयवी वा सावयवी वेति विवेचनीयम्। तमसः निरवयवत्वे आकाशवन्नित्यत्वात् आलोकाद् अनिवर्त्यं स्यात्तमः। तस्य अवयवारम्भकत्वे तदवयवेषु परमाणुषु सस्पर्शवत्वं निस्पर्शवत्वं वा भवेत्। स्पर्शवदवयवत्वे तमस्यपि स्पर्शेन्द्रियग्राह्यत्वं स्यात्। समवायिकारणगतविशेष-गुणस्य कार्ये सजातीयगुणस्य आरम्भकत्वनियमः दार्शनिकलोके अभिमतोस्ति। किन्तु न तमसि स्पर्शविषयता। तमसः निस्पर्शवदवयवारम्भकत्वे तस्य अवयवारम्भकत्वं मनोवद् अयुक्तम्। तदानीं यत्स्पर्शरहितं न तत् द्रव्यारम्भकं यथा मनः इति अभ्युपगन्तव्यम्। न तमः गुणकर्मसामान्यविशेषसमवायेष्वपि अन्तर्भवति।

तमसः भावस्वरूपत्वेपि तदपरोक्षज्ञानं न युक्तम्। स्पर्शवत्वं तमसि पूर्वमेवासिद्धम्। नयनमपि न तमसः प्रत्यायकम्। यतः नयनाव्यापारेपि तमः उपलभ्यते। निमीलितनयनोपि तमः जानाति। लोके रूपं रूपवन्तं च आलोकसहकृतं चक्षुः साक्षात्करोति, नालोकनिरपेक्षचक्षुः। तमसोपि रूपवत्वे तस्मिन् आलोकनिरपेक्ष-चक्षुर्जन्यसाक्षात्कारविषयत्वं न स्यत्। न मनसापि तमसः उपलब्धिः। यतः

बाह्येन्द्रियनिराश्रयं मनः न बाह्यं वस्तु साक्षात्करोति। तमस्तु बाह्येन्द्रियागोचरमिति न तत् मानसप्रत्यक्षयोग्यमस्ति।

षड्पदार्थान्यतमत्वेपि तमसः ज्ञापकं किञ्चिन्नास्तीति आलोकाभावः तमः इति सिध्यति। तमसः आलोकाभावत्वसाधकः अनुमानप्रयोगः, तमःपदं आलोकाभाववाचकं आलोकानपेक्षचक्षुर्ग्राह्यवाचकत्वात् आलोकाभावपदवत् इति तार्किकाणामस्ति। एवं तमश्शब्दवाच्यः भावो न भवति आलोकाजन्यचाक्षुषज्ञान- विषयत्वादिति सिध्यति। एवं परिशेषात् आलोकाभावो वा निमीलितनयनस्य अबाधिततमःप्रतीत्या रूपप्रत्यक्षाभावो वा तमः इति तार्किकाणां सिद्धान्तः।

**अद्वैताभिमतः तमोविषयः सिद्धान्तः**

उपचयापचयाद्यवस्थाभेदविशेषविशिष्टं लोके रूपवत्तया च उपलभ्यमानं तमः भाववस्त्विति प्रकाशात्मा अभिप्रैति। लोके ईषत्तमः, गाढं तमः, तमालश्यामलं तमः इति व्यवहारोस्ति। अयं तमोविषयलोकानुभवः चित्सुखस्यापि सम्मतः। नीलं तमः इति लौकिकः व्यवहारः न भ्रमः इति अद्वैतिनां विचारः। सः व्यवहारः तमसि प्रमाणमेव। चेतनव्यवहारस्य ज्ञानपूर्वकत्वनियमात् नीलं तमः इति व्यवहाराय तमसः ज्ञानं अपेक्षते एव। व्यवहारात् तमसः भावत्वं उपपादयितुं न शक्यत इति तार्किकाणां विचारः। किन्तु आलोकाभावे नीलं तमः इति गौणव्यवहारः युक्तः इति तेषां पक्षः। न हि तत्र नीलबुद्धिं आपादयितुं किञ्चित् वस्त्वस्ति। अतः तत्रत्या नीलप्रतीतिः भ्रमः भवितुमर्हति। यतः अप्रतीतावपि प्रतीतिभ्रमः मन्दानामुपजायते। सिताभावे उपचारात् असितमिति वा नीलमिति वा लौकिकैः प्रयुज्यत इति तत्र नीलमिति गौणः पदप्रयोगः उपपद्यते इति तर्काभिप्रायः। इत्थमालोकाभावेपि औपचारिकः व्यवहारः, सिंहो माणवकः इतिवत् सेत्स्यतीति मानमनोहरकारः नाथश्चाभिप्रैतीति नयनप्रसादिन्यां प्रत्यग्स्वरूपेण सूचितमस्ति। किन्तु तयोरभिप्रायः नाद्वैतिनां अभिमतः। शब्दस्य मुख्यार्थबाधे सति गौणप्रयोगः। इह नीलं तमः इति व्यवहारे नहि मुख्यार्थबाधः इति न तत्र गौणप्रयोगः अभिमतः। नीलप्रतीतेः बाधाभावाच्च तमसः दशमद्रव्यत्वं सिध्यतीति अद्वैतविचारः।

नीलं तमः इति प्रतीतौ अस्ति मुख्यार्थबाधकमिति मानमनोहरकारः। इह मुख्ये किं बाधकमिति चेत् आलोकनिरपेक्षस्य चक्षुषः रूपप्रत्ययजनकत्वानुपपत्तेः, कारणाभावे कार्यं जायते इति दुर्घटमिह मुख्यार्थबाधकमिति मानमनोहरकारः। किन्तु आलोकविरोधि-तमसः प्रत्यक्षः आलोकनिरपेक्षचक्षुषा उपपद्यते इति चित्सुखाभिप्रायः। रूपवदितरवस्तुनि आलोकसापेक्षचाक्षुषप्रत्यक्षत्वेपि तमःप्रत्यक्षे तन्निरपेक्षचक्षुर्गोचरत्वं अद्वैतिनां अभिमतम्।

चक्षुर्व्यापाराभावेपि तमसः उपलब्ध्या नह्यचाक्षुषत्वं तस्य। नेत्रं हि तमसः ग्राहकम्। बहुळालोकविततेपि देशे निमीलितनयनस्य गोलकान्तरवर्तितमोदर्शनात् अन्धकारोपलब्धिः, पिहितकर्णपुटस्य आन्तरशब्दोपलब्धिवत् न विरुध्यते इति प्रकाशात्मा अभिप्रैति। सामर्थ्यं नाम कार्यगम्यमस्ति। ततः तमसि गन्धव्यावृत्या न तद्व्याप्यश्यामत्वं निवर्तते। अथवा आस्तां तावत् पृथिव्यां गन्धव्याप्यः अनुष्णाशीतस्पर्शः, किन्तु गन्धाभाववत्यपि वायौ अनुष्णाशीतस्पर्शवत्वं प्रतीयते। अतः प्रतीतिबलात् तमसि नीलत्वं अभ्युपेयम्। तार्किकाणां मतानुसारं नानुष्णाशीतस्पर्शमात्रस्य गन्धेन व्याप्तिः। पृथिव्यां पाकजस्यैव अनुष्णाशीतस्पर्शस्य तेन व्याप्तिः। वायौ अपाकजानुष्णाशीतस्पर्शत्वम् अभिमतम्। तस्मात् पाकजस्पर्शस्यैव व्यापकगन्धव्यावृत्या व्यावृत्तिः नापाकजस्य। अतः तमसि व्यापकगन्धनिवृत्या श्यामत्वं व्यावर्तत एवेति तार्किकाणां आक्षेपः।

तमसि वायुवत् अपाकजकालिमा इति ततः गन्धव्यावृत्या पाकजकालिमायाः निवृत्तावपि अपाकजा सा न निवर्तते इति चित्सुखविमर्शः तार्किकं प्रत्यस्ति। वायौ यद्वत् अपाकजस्पर्शः त्वचा विज्ञायते तथैव तमसि अपाकजकालिमा (नीलिमा) चक्षुषा विज्ञायते। सद्भावग्राही प्रत्यक्षप्रमाणं उभयत्र समानम्। तमः रूपरहितं स्पर्शरहितत्वात् इति प्रयोगादपि न तमसः नीलरूपत्वं निषेद्धुं शक्यते। यतः रूपरहितत्वं साध्यं रूपग्राहकप्रत्यक्षेण बाधितमस्ति।

यत्तु स्पर्शरहितं न तत् द्रव्यारम्भकं यथा मनः इति व्याप्त्याधारेण तमपरमाणवः द्रव्यानारम्भकाः स्पर्शाभावात् मनोवदिति कन्दलीकारप्रयुक्तं अनुमानं नयनप्रसादिन्यां उद्धृतमस्ति। ततः तमःपरमाणूनां तमद्रव्यारम्भकत्वं न सिद्ध्यति। तेन तमस्सिद्धिरेव न

स्यात्। किन्तु अद्वैती कन्दलीकारदूषणं भाट्टमतमवलम्ब्य निराकरोति। कन्दलीकारानुमितौ व्याप्यत्वासिद्धिरस्तीति अद्वैतिनां अभिप्रायः। तदारब्धकार्यवैयर्थ्यमत्र उपाधिः। नातः अस्पर्शवत्वद्रव्यानारम्भकत्वयोरस्ति व्याप्तिः। मनसा आरब्धे द्रव्ये शरीरत्वेन इन्द्रियत्वेन विषयत्वेन वा भोगसाधनत्वं (सार्थकता) अनुपपन्नम्। भोगसाधनत्वाभावादेव तदारब्ध-कार्यव्यर्थत्वमापद्यते। पार्थिवजलीयतैजस-वायवीयानि सन्ति चतुर्विधशरीराणि। न तदतिरिक्तं प्रमाणसिद्धं किञ्चिच्छरीरमस्ति येन तत् इन्द्रियाश्रयं स्यात्। ततः मनोनिर्मितं शरीरं न भोगसाधनम्। किञ्च स्वयं अन्तरिन्द्रियं मनः। ततः न तदारब्धद्रव्यं इन्द्रियाश्रयः स्यात्। मनःआरब्धकार्यस्य विषयात्मनापि न भोगसाधनत्वम्। रूपस्पर्शशून्यान्तःकरणारब्धस्यापि रूपस्पर्शाभावात् न तद्विषये बाह्येन्द्रियप्रवृत्तिरुपपद्यते। शरीरेन्द्रिय-व्यतिरिक्तः अवयवी हि विषयः। न च रूपस्पर्शरहितस्य अवयवित्वं, कार्यत्वे सति रूपस्पर्शवतः अवयवत्वादिति भावः। न मनोजन्यस्य इन्द्रियात्मनापि उपयोगः। मनसः एव इन्द्रियत्वे पुनः तदारब्धेन्द्रियान्तरत्वं व्यर्थमेव। शरीरेन्द्रियविषयेषु अन्तर्भूतस्यैव कार्यद्रव्यस्य भोगसाधनत्वं तर्कशास्त्रे सम्मतं नानन्तर्भूतस्य।

इत्थं मनसि द्रव्यानारम्भकत्वं (साध्यं) तदारब्धकार्यव्यर्थत्वं उपाधिश्च विद्येते। अतः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपं साध्यव्यापकत्वं उपाधावस्ति। तामसपरमाणुषु स्पर्शाभावत्वं हेतुरस्ति। न तत्र उपाधिः। अतः साधनवन्निष्ठात्यन्ताभाव-प्रतियोगी-साधनाव्यापकः भवति उपाधिः। ततः कन्दलीकारानुमानं सोपाधिकमिति न तमः परमाणुषु तमः द्रव्यानारम्भकत्वस्य सिद्धिः। तमः परमाण्वारब्धं तम इति भाट्टमीमांसा। तमः परमाणुः स्पर्शरहितवानस्ति, न तत्र तदारब्धद्रव्यव्यर्थत्वं उपाधिः। तमः द्रव्यवादिनां मतानुरोधेन समर्थितमिदं तमसः भावत्वम्। भाट्टमते अस्पर्शवत् परमाण्वारब्धमस्ति तमः। सुखस्पर्शा चूतच्छाया, उष्णस्पर्शा वटच्छायेति प्रतीतेः भोगसाधनत्वमस्ति तमसि। तमसः महत्परिमाणात् विषयेणापि तमः भोगसाधनमेव। नातः तमसि परमाण्वारम्भव्यर्थता। आरम्भव्यर्थतायां हि अनारम्भकत्वम्।

अद्वैतसम्प्रदायानुसारं न परमाणुनिर्मितं भवति तमः येन द्व्यणुकादिपरम्परया तमसः उत्पत्तौ विलम्बः स्यात्। अनिर्वचनीयाविद्यासचिव- ब्रह्मविवर्तमस्ति अद्वैते तमः। आलोकविनाशितस्य च तमसः पुनः मूलकारणादेव झटिति महाविद्युदादिजन्मवत् जन्म सिद्ध्यतीति अद्वैतमतम्। तथैव तमसः स्पर्शरहितपरमाणुजन्यत्वाभावः अद्वैते पूर्वमेव प्रसिद्धमस्ति। ततः कन्दलीकारानुमितौ सिद्धसाधनत्वमस्ति।

नाद्वैते मनसः अनारम्भकत्वम्। मनसः सावयवद्रव्यत्वात् परिणामित्वमस्ति। अतः कन्दलीकारानुमितौ दृष्टन्तासिद्धिरायाति। स्पर्शाभाववदात्मन्यपि जगतः विवर्तोपादानकारणत्वं अस्ति। अतः द्रव्यानारम्भकाभाववदात्मवृत्तित्वमपि स्पर्शाभावहेतोः अस्तीति कन्दलीकारानुमितौ साधारणानैकान्तिकत्वञ्च वर्तते। अतः सावयवं द्रव्यमस्ति तमः, न तेजोभावः। अतः तमः द्रव्यं श्यामरूपत्वात् घटवदिति सिद्ध्यति।

चलनक्रियातश्च तमः आलोकवत् द्रव्यान्तरम्। दीपकादिचलनानुधाविनः तमसः स्वाभाविकचलनं सुवर्णवत् उपपद्यते। यद्यपि आकरजसुवर्णे तेजसि भौमांशाश्रयत्वात् तदनुकरणमधःपतनमस्ति तथापि प्रकृतं ऊर्ध्वचलनं न विनश्यति। एवं तमः द्रव्यान्तरमनुकरोत्यपि स्वाभाविकक्रियावदेव।

आलोकासहकृतचक्षुः तमः गृह्णाति। चक्षुः आलोकाजन्यरूपिद्रव्यसाक्षात्कार-जनकं रूपिद्रव्यग्राहकेन्द्रियत्वात् त्वगिन्द्रियवत् इत्यनुमानं अत्र प्रमाणम्। रूपरहिते-न्द्रियत्वे साध्यव्यापकत्वाभावात् न उपाधित्वं इति अनुमानमिदं अदुष्टम्। यत्र साध्यं तत्र उपाधिः, यत्र उपाध्यभावः तत्र साध्याभावः इति साध्यस्य उपाधिना सह नूनं अन्वयव्यतिरेकव्याप्ती स्याताम्। किन्तु अत्र व्यतिरेकव्याप्यां सोपाधिकत्वं अस्ति। चक्षुः आलोकानपेक्षरूपिद्रव्यसाक्षात्काराजनकं रूपरहितेन्द्रियत्वाभावात् घ्राणवदिति, उपाध्य-भावात् साध्याभावसाधकव्यतिरेकव्याप्त्यां रूपिद्रव्याग्राहकत्वं उपाधिरस्ति। तथाहि यत्र आलोकानपेक्षरूपिद्रव्यसाक्षात्काराजनकत्वं तत्र रूपिद्रव्याग्राहकत्वं यथा घ्राणः इति साध्यव्यापकत्वं, यत्र रूपरहितेन्द्रियत्वाभावत्वं (रूपसहितेन्द्रियत्वं) तत्र रूपिद्रव्या-ग्राहकत्वं नास्ति यथा चक्षुः इति साधनाव्यापकत्वं च रूपिद्रव्याग्राहकत्वोपाधौ वर्तते।

अतः रूपरहितेन्द्रियत्वोपाध्यभावेन आलोकाजन्यरूपिद्रव्यसाक्षात्कारजनकत्वाभावात्मकसाध्याभावसाधकव्यतिरेके हेतौ, रूपिद्रव्याग्राहकत्वोपाधिसत्वात्, रूपरहितेन्द्रियत्वलक्षणोपाध्यभावे आलोकाजन्यरूपिद्रव्यसाक्षात्काराजनकत्वलक्षणसाध्यस्य अभावः न सिद्ध्यति। उपाध्यभावाधिकरणे साध्याभावः नास्ति चेत् साध्यसत्त्वं स्यात्। उपाध्यभाववति अपि साध्यश्चेत् उपाधेः साध्यव्यापकत्वं उपहन्यते। अतः रूपरहितेन्द्रियत्वे उपाधित्वं नास्तीति, आलोकाजन्यरूपिद्रव्यसाक्षात्कार- जनकत्वसाधकानुमानेन तमः चक्षुर्गोचरं स्यात्। तस्मादालोकवत् द्रव्यारन्तरमस्ति तमः इति सिद्धान्तितं अद्वैतदर्शने।

**सहायकग्रन्थाः**

1.Citsukha. Tattvapradipika(Citsukhi): Nayanaprasadini Vyakhyaya Sahita. Edited by Sastri Kasinatha,
Varanasi, Caukhamba Samskrita Pratisthana, 1987

2. Sankara. Brahmasutra Sankarabhashyam. With the commentaries Bhashyaratnaprabha of
Govindananda. Bhamati of Vacaspatimisra. Nyayanirnaya of Anandagiri,Delhi; Varanasi,
Mothilal Banarasidas, 1980

3. Ten Principal Upanishads with Sankarabhashya. Delhi. Motilal Banarsidas ,1964

4. S. N Dasgupta, History of Indian Philosophy. Delhi. Motilal Banarsidas ,2019

 ISSN : 2277-2359

# अद्वैतवेदान्ते वङ्गीयानां योगदानम्

**डा. नेपालदासः**

सहायकाचार्यः, एकलव्यपरिसरः,

के.सं.वि.वि., अगर्तला

**शोधसारः**

अस्मिन् पत्रे तेषामेव समुल्लेखः मया क्रियते येषां अद्यतने प्रचलनं तथा नास्ति। शास्त्रेण साकं एतेषामपि विस्मरणं भवति। अतः तेषां समुल्लेखः अस्यां लेखायां क्रियते। एकैकस्य परिचयः तत्कृतिभिस्सह सामान्यरूपेण आलोच्यते।

**उपोद्घातः**

शास्त्रभेदे परम्परा भिद्यते, किञ्च एकस्मिन् शास्त्रेऽपि भिन्ना भिन्ना परम्परा विद्यते। प्रान्तभेदेऽपि परम्परायाः भेदः दृश्यते। मध्ययुगे वङ्गप्रदेशः आसीत् शास्त्रचर्चाया अन्यतमः पीठस्थानम्। तत्र न्यायस्य वेदान्तस्य व्याकरणस्य च पाठः आसीत्। तेषां बहूनां पुस्तकानां अद्यावधि समुपलम्भः अस्ति।

**रघुनाथशिरोमणिः** (१४७७-१५४७ A.D.)

रघुनाथशिरोमणिरयं वङ्गदेशीयः 'नदिया'वासी न्याये वेदान्ते नितरां निष्णातोऽपि, विशेषतः नैयायिकः।

**ओं नमस्सर्वभूतानि विष्टभ्य परितिष्ठते।**

**अखण्डानन्दबोधाय पूर्णाय परमात्मने॥**

इति स्वग्रन्थेषु वदन्नयम् अद्वैतब्रह्मणि विशेषमभिनिवेशं दर्शयति इति अद्वैतकोटिमारोहति। विद्वन्मण्डले तार्किकशिरोमणिरिति बिरुदभूषितोऽयं रघुनाथकविरिति दर्शनात् कविरपीति ज्ञायते। स्वीये चतुर्थ एव वयसि प्राप्तपितृवियोगोऽयं असहायया बन्धुजनवियुक्तया आतङ्कितया दारिद्र्यदुःखोपहतया मात्रा परिश्रमानविगणय्य पालितः पोषितश्च। एकदा मात्रा परिश्रमानविगणय्य स्वपुत्रपालने बद्धपरिकरया स्वपुत्रः अङ्गाराहरणाय गृहान्तरं प्रेषितः। रिक्तहस्तोऽयम् अङ्गारग्रहणसमये तापपीडानिवारणाय स्वहस्तयोस्सिकताः

गृहीत्वा तासु अङ्गारान् जग्राह। तादृशबुद्धिकौशलं सन्दृश्य सन्तुष्टमनाः वासुदेवसार्वभौमाख्यः नैयायिकाग्रणीः रघुनाथं सर्वाणि शास्त्राणि अध्यापयामास। गुरूपदिष्टानाम् अर्थानां न्यग्रोधवृक्षस्य अधस्तात् उपविश्य प्रतिरात्रं मननशीलोऽयं रघुनाथ अतितरां तुष्टेन स्वगुरुणा **"शिरोमणि"**रिति बिरुदेन भूषित इति साम्प्रदायिकी कथा।

काणोऽयं पक्षधरमिश्रसमसामयिक इति च श्रूयते। अत एव **'अभाग्यं गौडदेशस्य यत्र काणश्शिरोमणिः'** इति कथनमपि श्रूयते। रघुनाथोऽयं मिथिलां गत्वा पक्षधरमिश्र इत्यपरनाम्नः जयदेवपण्डितस्य सकाशे न्यायविद्यायां महतीं नैपुणीमाससाद। कक्षायां रघुनाथप्रश्नैः पराजितोऽयं पक्षधरमिश्रः रघुनाथाय चुकोप। गुरुकृतपरिभवासहिष्णुरयं रघुनाथः रात्रौ स्वगुरुं पक्षधरं जिघांसुः खड्गहस्तः गुरोश्शयनागारं प्रविवेश। तत्र गतोऽयं रघुनाथश्लाघाप्रधानं स्वपत्न्या साकं पक्षधरकृतं वार्तालापं श्रुत्वा सञ्जातलज्जः गुरवे क्षमामयाचत इति कथा च श्रूयते। परन्तु पक्षधरकालः १२७५ A.D. इति सिद्धान्तः। एवञ्च रघुनाथस्य तत्समसामयिकत्वे ऋते एतस्याः कथाया नान्यत् प्रबलं प्रमाणमिति कथेयं पण्डितमण्डलीप्रसिद्धा किरातार्जुनीयकारस्य भारवेः कथां मनसि कृत्वा केनापि प्रसिद्धिं यापितेति निर्णीयते।

**श्रीमद्योगेन्द्रनाथबागची**

ब्रह्मविदां वरिष्ठेन ब्रह्मभूयङ्गतेन बागचीत्युपाह्वेन महामोहपाध्यायश्रीमद्योगेद्रनाथदेवशर्मणा मधुसूदनसरस्वतीप्रणीताद्वैतसिद्धेः बालबोधिनीनामधेया टीका विरचिता। अयं महानुभावः अखण्डवङ्गदेशस्य पूर्वभागे मयमनसिंहमण्डलान्तर्गते सुसङ्गदुर्गापुरनामग्रामे जन्म अलभत। तस्य पितरौ जगच्चन्द्रबागची तथा शारदासुन्दरीदेवी। जगच्चन्द्रस्य त्रयः पुत्राः आसन्। अयमेव मध्यमः श्रीमद्योगेन्द्रनाथः बालबोधिनीटीकाकारः यस्य अष्टादशविद्याप्रस्थानेषु स्वातन्त्र्यं तेनैव विरचितग्रन्थराशयः उद्घोषयन्ति। तस्य ख्यातिः आ सुसङ्गदुर्गापुराख्यात् ग्रामात् आ हरिद्वारपर्यन्तं परिव्याप्ता।

बालवोधिनीकारस्य नव्यन्याये विद्यागुरवः आसन् तर्कतीर्थोपाधिभाजः दिवंगता महामहोपाध्यायाः श्रीमच्चण्डीदासभट्टाचार्याः श्रीमद्गोपालनाथभट्टाचार्याश्च। तस्य

तु ब्रह्मविद्यागुरव आसन् महामहोपाध्यायाः द्रविडभूगीर्वाणशिरोमणयः श्रीमल्लक्ष्मण-शास्त्रिमहोदयाः।

यद्यपि अद्वैतसिद्धेः गौडब्रह्मानन्दसरस्वतीविरचिता गुरुचन्द्रिका, लघुचन्द्रिका, तथा बलभद्रकृताद्वैतसिद्धिव्याख्या इत्यादयः ग्रन्थाः सन्ति, परन्तु बालबोधिनीटीका अनन्यसाधारणी वर्तते। ग्रन्थेऽस्मिन् परमतखण्डनं न कृतम्। परन्तु अद्वैतसिद्धेर्मूलस्य गूढातिगूढरहस्योद्घाटनप्रसङ्गे प्राचीननवीनोभयमतमनुसंदधानेन स्वसिद्धान्तसेतुना सम्बन्धि, उभयोर्मतयोर्समन्वयश्च लोकोत्तरया प्रतिभया विशदं प्रादर्शि। अद्वैतसिद्धिकारस्योपजीव्यान् ग्रन्थान् अनन्यसाधारणधिषणया विनिर्मथ्य अद्वैतसिद्धिकारस्य स्वकीयचिन्तायां मौलिक-त्वमेतावदेव इति स्पष्टमवाधारि। अस्याः टीकायाः अद्वैतसिद्धिवोधनाय महती भूमिकास्ति। श्रीमद्योगेन्द्रनाथः प्रौढावस्थायां टीकामिमाम् अरचयत्। अस्याः टीकायाः सम्पूरणात् पूर्वमेव जरयाभिभूतं शरीरं विहाय परलोकं प्राप्तवान्। इयं टीका आगमबाधोद्धारपर्यन्तमेव प्राप्यते।

**कृष्णनाथन्यायपञ्चाननः** (१८९२ A.D.)

अर्जुनमिश्रवंशजः केशवचन्द्रपुत्रश्चायं नवद्वीपवासी मीमांसार्थसंग्रहसांख्यतत्त्व-कौमुदी-अभिज्ञानशाकुन्तलादीनां व्याख्याता एकोनविंशतिशतकीय इति ज्ञायते। अनेन कृता वेदान्तपरिभाषाव्याख्या आशुबोधिन्याख्या कल्कत्तानगरे मुद्रिता।

**श्रीधराचार्यः** (१०००ई.)

अष्बोकाबलदेवयोः पुत्रः गौडदेशवासी श्रीधराचार्यः। न्यायकन्दलीतत्त्वबोध-तत्त्वसंवादिनीसंग्रहटीकानां कर्त्रा अनेन अद्वयसिद्धिरिति अद्वैतग्रन्थोऽपि रचित इति ज्ञायते। निर्दिष्टश्च न्यायकन्दल्याम्।

**चिरञ्जीविभट्टाचार्यः** (१६७५-१७५०A.D.)

गौडदेशजोऽयं काश्यपगोत्रजः चिरञ्जीविभट्टाचार्यः रामदेवचिरञ्जीव-वामदेव-चिरञ्जीवि इत्यपरनाम, सामुद्रिकाचार्यपौत्र इति ज्ञायते। स्वकृतविद्वन्मोदतरङ्गिण्यां -

**द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्रुतः**

**भट्टाचार्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।**

**विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना...**

इत्यादिवर्णनात् शतावधानभट्टाचार्यापराभिधानराघवेन्द्रस्य पुत्र इति निर्णीयते। स्वकृत-काव्यविलासे रघुदेवन्यायालङ्कारशिष्य इति ज्ञायते।

**विद्वन्मोदतरङ्गिणी**

ग्रन्थोऽयं श्रव्यकाव्यशैल्यां प्रणीतः विविधदर्शनसारसंग्रहात्मकः शास्त्रप्रसिद्धैः युक्तिजालैः व्यावहारिकैश्च युक्तिजालैः वैष्णवशाक्तवैशेषिकनैयायिकालङ्कारिकसिद्धान्तान् तदीयानाशयभेदांश्चोपवर्णयन् नास्तिकैस्साकं तत्तद्दार्शनिकानां वादप्रतिवादं सयुक्तिकं प्रकाशयन् नास्तिकवादखण्डनाय वेदान्तशास्त्रस्य न्यायशास्त्रापेक्षितत्ववर्णनपूर्वकं आत्मन अद्वितीयत्वं

**ब्रह्मण्येव समुत्पद्य जगत्तत्रैव लीयते।**

**बुद्बुदा इव तोयेषु शुक्तयो रजतेष्विव।**

इत्यादिना प्रतिपादयति। प्रसङ्गवशात् हरिहराद्वैतभावनां प्रकाशयति। ग्रन्थोऽयं कल्कत्ता-ग्रन्थमालायां वेङ्कटेश्वरमुद्रणालये मुम्बईनगर्यां काव्यप्रकाशमुद्रणालये वाराणस्याञ्च मुद्रितः। काव्यविलासः, शृङ्गारतटिनी, वृत्तरत्नावली, माधवचम्पूरिति ग्रन्थाश्च अनेन रचिताः।

**खण्डनभूषामणिः**

खण्डनखण्डखाद्यव्याख्यात्मकोऽयं खण्डनदीधित्यपरनामा ग्रन्थ अंशतः चौखाम्बामुद्रणालये मुद्रितः। अमुद्रितस्तु (R.4344 MGOML) लभ्यते।

**श्रीवत्सलाञ्छनभट्टः (९१८२५-१९५०)**

विष्णुध्वजाचार्यपुत्रोऽयं श्रीवत्सशर्मा गौडदेशज अष्टादशशतकीय इति ज्ञायते।

**सिद्धान्तरत्नमाला**

ग्रन्थोऽयं वेदान्तार्थनिरूपणापरनामा द्वैतवादिमतखण्डनपूर्वकमद्वैतप्रक्रियाः

प्रतिपादयन् अद्वैतसिद्ध्युक्तं प्रपञ्चमिथ्यात्वमनुवदति। ग्रन्थसमाप्तिश्चानेन ग्रन्थकर्त्रा १८४० शके इति निर्दिश्यते।

**बलदेवविद्याभूषणः**

बलदेवविद्याभूषणः १८ ईशावीयपूर्वार्धे वङ्गप्रदेशस्य मेदिनीपुरजिलायां वैश्यवर्गे जन्म अलभत। सः गौडीयवैष्णवधर्मं स्वीकृतवान्। पीताम्बरदासस्य सकाशे शास्त्राध्ययनात् पश्चात् बृन्दावनं गत्वा विश्वनाथचक्रवर्तिनां शिष्यत्वं गृहीतवान्। विश्वनाथचक्रवर्तिनां स्वतन्त्रः पन्था आसीत्। तेषाम् अनन्तरं बलदेवविद्याभूषणः तस्य उत्तराधिकारी अभवत्। बलदेवविद्याभूषणः वैष्णवसम्प्रदायदृष्ट्या ग्रन्थान् अलिखत्। तस्मिन् समये बृन्दावने जयपुरनरेशस्य शासनम् आसीत्। केचन विरोधिनः बृन्दावनस्य चैतन्यसम्प्रदायस्य विरुद्धं जयपुरनरेशम् उक्तवन्तः। जयपुरनरेशेन सत्यासत्यज्ञानाय जयपुरे एका विद्वत्सभा आयोजिता। तस्यां सभायां गत्वा बलदेवेन विविधप्रमाणैः साधितं यत् चैतन्यमतं वेदविरोधि न अपि तु वेदानुकूलमेव।

तस्यां सभायां विद्वांसः बलदेवम् अपृच्छन्- भवतां मतस्य ब्रह्मसूत्रभाष्यं किम् ? बलदेवः अकथयत् एतावता नास्ति, परन्तु निर्माणं करोमि। तत्पश्चात् बलदेवः ब्रह्मसूत्रस्योपरि श्रीचैतन्यदेवप्रणीतवैष्णवमतानुसारं गोविन्दभाष्यम् अलिखत्।

एतदतिरिच्य सः सिद्धान्तरत्नम्, पद्यावली, कृष्णानन्दिनी, व्याकरणकौमुदी, प्रमेयरत्नम्, साहित्यकौमुदी, वेदान्तस्यमंतकम्, काव्यकौस्तुभः, छन्दःकौस्तुभभाष्यम् इत्यादि ग्रन्थान् अलिखत्। अनेन कृतौ अद्वैतग्रन्थौ सिद्धान्तरत्नप्रमेयरत्नाख्यौ चौखाम्बायां मुद्रितौ।

**ग्रन्थसूची**

1. श्रीमम, श्री श्री रामकृष्णककथामृत. कोलकाता, उद्बोधन कार्यालय.(2014)
2. अप्पय्यदीक्षितः. सिद्धान्तलेशसंग्रहः. (पारसनाथद्विवेदी, सं.) वाराणसी: सम्पूर्णान्द-संस्कृत-विश्वविद्यालयः.(2005).

3. ईशावास्योपनिषद्. . वाराणसी: चौखाम्बा स.प्र. (1995).
4. जगदीशशास्त्री(सं.). उपनिषत् संग्रहः,.देहली: मोतीलालवेनासीदाशः. (1984).
5. दीनेशशास्त्री. पञ्चदशी.वाराणसी: चौखाम्बा प्रकाशन्. (1970).
6. विवरणाचार्यः. पञ्चपादिका(संस्क. प्रथमः). तिरुपतिः: राष्ट्रियसंस्कृतविद्यापिठम्. (1985).
7. व्यानार्जी दीपकदास. छान्दोग्योपनिषद्.कोलकाता: देशप्रकाशन्. (1990).
8. शङ्कराचार्यः. ब्रह्मसूत्रशाङ्करभाष्यम्(परिमलो कल्पतरु भामती टिका सहित). (श्रीमदनन्तकृष्णशास्त्री, सं.) वाराणसी, कृष्णदास अकादमी. (2000).

# धर्मशास्त्रं तथा प्राचीनभारतीयशिक्षा च

**हरिकृष्णन् वि.पि.**
सहायकाचार्यः, आध्यात्मिक एवं सांस्कृतिकशिक्षणविद्यालयः
अमृतविश्वविद्यापीठम्, चेन्नई

**कुञ्चिकापदानि**

शिक्षा, भारतीयशिक्षा, वेदः, पुरुषार्थाः, धर्मः, शिक्षकः, छात्रः

**सारांशः**

प्राचीनभारतीयशिक्षायाः स्वरूपं तथा च शिक्षाव्यवस्थायां धर्मशास्त्रस्य पात्रता इत्यादिकम् अत्र सप्रमाणं निरूपितं वर्तते। पुरुषार्थानाम्, आश्रमाणाम्, तदनुगुणं शिक्षा-व्यवस्थायाः निर्माणमपि अत्र निरूपितं वर्तते।

**उपोद्घातः**

**ध्रियते तिष्ठति वर्तते इति धर्मः**[1] इत्यस्ति धर्मस्य परिभाषा। अर्थात् यः शाश्वतः निरन्तरः च्युतिहीनः स एव धर्मः इति। विश्वे विद्यमाना अतिपुरातनी संस्कृतिः भवति भारतीयसंस्कृतिः। इयं संस्कृतिः सहस्रशैः संवत्सरैः वर्तमाना, वर्धमाना च वर्तते। अस्याः संस्कृत्याः आधारः वेदः भवति। वेदाः अपौरुषेयाः च्युतिहीनाः स्थिराश्च सन्ति। वेदाधारेण प्रवर्तितस्य समाजस्य गतिविधिं निर्णेतुं, तथा जनजीवनं शान्तिपूर्णं रचयितुं च तत्तत्कालेषु बहवः नियमाः सामाजिकैः वरिष्ठैः रचयामास। एते नियमाः स्मृतयः इति प्रथिताः। कालक्रमेण धर्मशास्त्रमिति किञ्चन शास्त्रं प्रवर्तितं समाजे।

शास्त्रस्यास्य प्रवृत्तिः इदमेवासीत् यत् समाजे शान्तिसंस्थापनं तथा सामाजिकेषु उत्तमगुणसम्पादनञ्च। प्राचीनशिक्षा व्यवहारश्च धर्मशास्त्राधीनः आसीत्। प्राचीनकाले धर्मार्थकाममोक्षाः इत्येते चत्वारः पुरुषार्थाः आसन् मानवजीवनस्याधाराः, मार्गदर्शकाश्च। प्रत्येकं मनुजस्य जन्म एतेषां पुरुषार्थानां सम्पादनायैवासीत्।

प्राचीनस्य भारतीयसमाजस्य स्वरूपं शिक्षायाः तथा आध्यात्मिकविद्यायाश्च

---

[1] नव्यन्यायभाषाप्रदीपः।

सहवर्तित्वे आधारितमासीत्। शिक्षायाम् आध्यात्मिकतयाः प्राधान्यमासीत्। मनुजस्य अप्रतिरोध्यम् आन्तरिकशक्तिं बहिरानेतुं शिक्षया प्रयासः क्रियते स्म।

धर्मशास्त्रपारङ्गताः पण्डिताः सामाजिकपरिष्कर्तारः तथा संस्कृतिवाहकश्चासन्। समाजस्य, धर्मस्य, मूल्यानां च रक्षणे एतेषां महान् हस्तक्षेपः आसीत्। मानवः धर्मशास्त्रं प्राचीनभारतीयशिक्षायाः नियन्त्रकः अभवत्।

एवं धर्मशास्त्रग्रन्थाः प्राचीनभारतेतिहासस्य गतिविधिं प्रदर्शयन्ति। प्राचीन-भारतीयशिक्षायाः उद्भवस्य तथा संवर्धनस्य च इतिहासः धर्मशास्त्रे द्रष्टुं शक्यः। शिक्षायाः आत्यन्तिकमुद्देश्यं मोक्ष एवासीत्।

**शिक्षायाः उद्देश्यानि**

वेदः तादृशं वस्तु भवति येन जनः सुशीलः, वैरागी, निस्संगश्च भवति। भारतीय-दर्शनानि मानवजीवनम् उद्देश्यशून्यमिति न कदाप्यभिप्रैति। प्रत्येकं मानवस्य जीवनं लक्ष्यसम्पुष्टं भवति। विद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन सः वेदः[2] इत्येतत् वाक्यं तु मानवजीवने वेदानां प्रभावं पुरस्करोति।

सम्पादितस्य ज्ञानस्य समाजकल्याणार्थं विनियोग एव मानवजीवनधर्मः। मानवजीवने भारतीयदर्शनानुसारं मानवजीवने चतस्रः दशाः भवन्ति, ताश्च दशाः आश्रमाः इति इत्यभिधीयन्ते। ते चाश्रमाः ब्रह्मचर्यं, गार्हस्थ्यं, वानप्रस्थं, सन्यासः इत्येते सन्ति। प्रत्येकस्मिन्नाश्रमे मानवेन परिपाल्यमानाः धर्माः सन्ति। एते एव आश्रमधर्माः इत्युच्यन्ते। प्राचीनभारतीयशिक्षाव्यवस्थायाम् एतेषामाश्रमसम्प्रदायानां महान् प्रभावः आसीत्। प्राचीनभारते शिक्षा इत्यनेन इदमेवोद्दिष्टं यत् मानवस्याध्यात्मिकशक्तीनां प्रचोदनं तथा तस्याः शक्तेः समाजकल्याणाय विनियोगः, पुनः आत्यन्तिकलक्ष्यस्य मोक्षस्य साधनञ्च। शिक्षायाः मुख्यानि उद्देश्यानि अत्रोच्यन्ते –

- पुरुषार्थानां सम्पादनम्।
- शिक्षया संशयनिवारणं तथा आध्यात्मिकौन्नत्यसंप्राप्तिः।

---

[2] का.श्रौ.भू.पृ.4

- मानवव्यवहारस्य शुद्धीकरणम्।
- मानवजीवनस्य सारावलोकनम्।
- मानवानां समाजकल्याणे विनियोगः।

**शिक्षायाः स्वरूपम्**

उपनयनसंस्कारेण एकस्य मानवस्य औपचारिकी शिक्षा प्रारभ्यते स्म। शिक्षा सम्पूर्णतया वेदाधारिता आसीत्। चत्वारः वेदाः, षट् वेदाङ्गानि, धर्मशास्त्रं, खगोलशास्त्रं, वेदगणितम्, आयुर्वेदः, वैद्यशास्त्रम् इत्यादयः आसन् पाठ्यविषयाः।

**शिक्षासंस्थाः**

गुरुकुलेषु प्रचलन्ती आसीत् शिक्षा। अनेकाः छात्राः गुरुकुलेषु वासं कृत्वा शिक्षामुपार्जयन्ति स्म। छात्राणां स्वभावनिर्माणाय एवं कुशलतासंवर्धनाय च गुरुकुलेषु विविधानि दायित्वानि ददन्ति स्म। छात्राणां व्यवहारः, भोजनव्यवस्था च व्यवस्थिता आसीत्। मांसादिभोजनं सर्वदा निषिद्धमासीत्। प्रातरारभ्य रात्रिपर्यन्तं अध्ययनेन साकं गुरुकुलसंयोजनकार्याण्यपि तैः छात्रैः करणीयान्यासन्। अहङ्कारनाशनाय तथा सर्वलोक-व्यवहाराय च छात्राः भिक्षायै प्रेषयन्ति स्म। तेषां व्रतस्तु **साधारणं जीवनम्, उच्चस्तरं चिन्तनञ्चा**सीत्।

**शिक्षकः**

प्राचीनभारतीयशिक्षा शिक्षकाधारिता आसीत्। छात्राणां विजयस्याधारः शिक्षक एवासीत्। आपस्तम्भधर्मसूत्रेषु[3] एवं विदितं कश्चन शिक्षकः छात्राणां संशयनिवारणाय सर्वदा सिद्धः स्यात्, शिक्षकः छात्रं न कदापि परित्यजेत् इति। आपस्तम्भधर्मसूत्रानुसारं शिक्षकस्य गुणाः एवं भवन्ति

- शिक्षकः छात्रं स्वपुत्रवत् परिरक्षेत्।
- शिक्षकः छात्राय स्वं सम्पूर्णं ज्ञानं दद्यात्, न किञ्चित् गोपयेत्।
- शिक्षकः छात्रं स्वधर्मात् कर्माच्च न कदापि निवारयेत्।

---

[3] आपस्तम्भधर्मसूत्रम्1.2.8.

- शिक्षकः सः स्यात् यः छात्रं समाजकल्याणे विनियोजयति।
- शिक्षकस्य दायित्वं दिव्यं वर्तते इति सः जानीयात्।

तत्र धर्मशास्त्रानुसारं त्रिप्रकारकाः शिक्षकाः वर्तन्ते। गुरुः, उपाध्यायः, आचार्यश्चेति।

**गुरुः**– यः छात्रान् आध्यात्मिकज्ञानं प्रददाति स एव गुरुः।

**उपाध्यायः**– येन शिक्षकेण आजीविकासम्पादनाय स्वीयं ज्ञानं उपयुज्यते सः उपाध्यायः।

**आचार्यः**– यः वेद-वेदाङ्गनिष्णातः सन् उत्कृष्टं जीवनं यापयति एवं छात्रेभ्यः जीवनविजयाय ज्ञानं प्रददाति स एव आचार्यः भवति।

इदं शिक्षकस्य दायित्वमासीत् यत् सः छात्राणां बुद्धिवैभवानुसारं तान् पाठयेत् इति। पाण्डित्यं तथा सौशील्यं च तस्य भवेत्। वेदोपासनया सः मनश्शुद्धिं सम्पादयेत्। शुद्धः सन्नेव सः छात्राणाम् उपदेशं कुर्यात्।

वस्तुतः एतादृशाः उपदेशाः वर्तमानसमाजेऽपि सङ्गताः एव।

**छात्रकल्पिताः गुणाः**

- छात्राः सदा शिक्षकसेवारताः सन्तु।
- छात्राः संस्कृत्याः, संस्कारस्य च रक्षणं कुर्वन्तु।
- छात्राः गुरुकुलकार्यक्रमेषु भागं गृह्णन्तु।
- छात्राः सदा गुर्वाज्ञापरिपालकाः सन्तु।
- छात्राः निरहङ्कारिणः सन् समाजसेवां कुर्वन्तु।
- छात्राः सर्वान् सुखभोगान् वर्जयन्तु।

**गौतमधर्मसूत्रेषु**[4] एवं वर्तते यत् छात्रः न कदापि गुरुं नाम्ना अभिवादयेदिति। **विष्णुधर्मसूत्रेषु** एवं वर्तते यत् कश्चन छात्रः न कदापि गुरुनिन्दां कुर्यात्, तथा गुरुनिन्दायां कृतायां सत्यां सः ततः निवर्तयेदिति।

**अध्ययनप्रणाली**

शिक्षणं मौखिकमासीत्। छात्राः वैदिकमन्त्राणि विधयश्च कण्ठस्थमकुर्वन्। उच्चारण-

[4] गौतमधर्मसूत्रम् 24.28.

भेदेन दोषाः मा भवेयुरिति धिया मौखिकाभ्यासः निष्ठया प्रचलति स्म। अधिगतच्छात्राः अधीतविषयाणां मननं कृत्वा स्वमनसि आमरणं यावत् ज्ञानसंरक्षणमकुर्वन्। तथा च कनिष्ठेभ्यः आर्जितज्ञानस्य प्रदानमपि अकुर्वन्। भाषाधिगमस्य महत् स्थानमासीत् शिक्षायां, तथा च शुद्धोच्चारणस्यापि। पाठितशब्दस्य शुद्धोच्चारणानन्तरमेव नूतनशब्दाः पाठ्यन्ते स्म। भाषाशिक्षणे व्याकरणशास्त्रज्ञानम् अत्यावश्यकमेव। वैदिककालेऽपि व्याकरणशिक्षणस्य विशिष्टं स्थानमासीत्। सन्धि- समासादीनां ज्ञानम् अनिवार्यमासीत्।

वैदिकशिक्षायाः अयमपि विशेषः आसीत् यत् स्त्रियः अपि विद्योपार्जने अधिकारिण्यः आसन्निति। अयमंशः अनेन विशिष्टः यत् इतरदेशेषु पुरातने तथा आधुनिककालेऽपि स्त्रियः सम्पूर्णतया विद्योपार्जने अनधिकारिण्यः इति। लोपामुद्रा, गार्गी, मैत्रेयी, विश्ववरा इत्येताः नारीमणयः तत्कालीनाः विदुष्यः आसन्। एवं च वर्णवर्गादिभेदं विना सर्वेऽपि मानवाः स्वक्षमतानुसारं यथेच्छं विद्योपार्जने अधिकारिणः आसन्।

**उपसंहारः**

प्राचीनभारतीयशिक्षाव्यवस्थायाः सुव्यवस्थापनं धर्मशास्त्रेण विहितम्। छात्रशिक्षकयोः संबन्धः, व्यवहारः, जीवनमित्यादयः विषयाः शास्त्रेऽस्मिन् सम्यगुपपादिताः। शिक्षायाः आत्यन्तिकं लक्ष्यं विश्वकल्याणमिति शास्त्रेनानेन उद्घोषितम्। शास्त्रेऽस्मिन् प्रतिपादिताः विविधाः विषयाः कालातिवर्तिनः वर्तन्ते। प्राचीनभारतीयसंस्कृत्याः आधारः धर्मशास्त्रम् आसीदिति निस्तर्क अंश एव।

**----इति शम्----**

**परिशीलितग्रन्थसूची**

1. History of Indian Education – Dr.S.P.Chaubey, Vinod PustakMandir, Agra
2. Education in ancient India – MitaliChatterji, D.K Print World, New Delhi
3. आपस्तम्भधर्मसूत्रम्
4. गौतमधर्मसूत्रम्
5. मनुस्मृतिः
6. अर्थसङ्ग्रहः
7. यास्कनिरुक्तम्

# नित्यदोषसमीक्षा

**डा.सुधीशः ओ.एस्.**
सहायकाचार्यः, ज्योतिषविभागः
सर्वकारीयसंस्कृतविद्यालयः, तिरुवनन्तपुरम्

**कुञ्चिकापदानि**

ज्योतिश्शास्त्रम्, षडङ्गानि, मुहूर्तः, षोडशसंस्काराः, मुहूर्तपदवी, नित्यदोषाः, उल्कापातः, उर्वीचलनम्, ग्रहणम्, गुलिकोदयः, सायाह्नम्, गण्डान्तः, करणम्, अहिशिरः।

**सारांशः**

ज्योतिश्शास्त्रं त्रिस्कन्धात्मकं षडङ्गान्वितं च। शास्त्रस्य षडङ्गेषु मुहूर्ताङ्गं मुख्यम्। शुभाशुभकर्मसु इष्टफलप्राप्तये निर्दिष्टः शुभकालः भवति मुहूर्तः। अयं शब्दः कालविशेष-वाचकः। मुहूर्तसम्बन्धाः बहवः ग्रन्थाः अद्य प्रसिद्धाः। तेषु मुहूर्तचिन्तामणिः, माधवीयम्, मुहूर्तरत्नम्, कालविधानम् इत्यादयः प्रसिद्धाः। देशाचारभेदेन मुहूर्ताः भिद्यन्ते।

केरलीयचारानुसारेण मुहूर्तविषयान् सङ्गृह्य लिखितः ग्रन्थः भवति मुहूर्तपदवी। पञ्चत्रिंशता श्लोकैः श्रीमता मातूर् नम्पूतिरिपाद्वर्येण रचितः अयं ग्रन्थः। प्रत्येकं कर्म कर्तुं कालस्य गुणदोषचिन्तनमत्र प्रतिपाद्यविषयः। मूहूर्तपदवीग्रन्थे सर्वेषु शुभकर्मसु वर्जनीयाः विंशतिः नित्यदोषाः उच्यन्ते।एकेन श्लोकेन लिखितानां नित्यदोषाणांसमीक्षा अत्र उच्यते।

**प्रस्तावना**

क्रियायोग्यः कालः मुहूर्तः इत्यभिधीयते। येषु केष्वपि शुभाशुभकर्मसु अभीष्ट-फलानयनाय निर्दिष्टः कालः भवति मुहूर्तः। शब्दोऽयं कालविशेषवाचकः। मुहूर्तः केवलं वेदोक्तप्रकारयागहोमादीनां मुहूर्तचिन्तनाय न, परन्तु मनुष्याणां चतुर्वर्गफलप्राप्त्यर्थं गर्भाधानादारभ्य मरणपर्यन्तस्य च कर्मानुष्ठानमुहूर्तचिन्तनमपि अत्र क्रियते। वेदोक्तप्रकारेण मनुष्याः जीवन्ति चेत् इह जन्मनि जन्मान्तरे च स्वस्थाः भविष्यन्ति। धर्मार्थकाममोक्ष-पुरुषार्थसिद्धिरेव मानवजन्मनः परमं लक्ष्यम्। तदर्थं वेदोक्तप्रकारेण षोडशसंस्काराः कर्तव्याः। आधानादारभ्य मरणपर्यन्तस्य षोडशक्रियायाः सुमुहूर्तचिन्तनमेव मुहूर्तशास्त्रस्य

मुख्यं प्रयोजनम्। मुहूर्तो नाम समयविशेषः। विभिन्नकार्यनिर्वहणाय पृथक् पृथक् समयाः निर्दिष्टाः। तदेव तस्य कर्मणः मुहूर्तमित्युच्यते। तत् तु नक्षत्रतिथिवारयोगकरणानां पञ्चाङ्गानां साहाय्येन निर्दिशति। शुभमुहूर्ते क्रियमाणं कार्यं शुभफलं जनयति, अन्यथा अशुभं भवति।

अह्नः पञ्चदशो भागः मुहूर्तशब्देन स्वीक्रियते, एवं रात्रेः च। एकस्मिन् दिने आहत्य त्रिंशन्मुहूर्ताः भवन्ति। गच्छति काले मुहूर्तशब्दस्यार्थव्याप्तिः बहुविस्तृता सञ्जाता। विवाहादिसंस्कारविशेषास्तथा चान्ये व्यावहारिककर्मविशेषाश्च निर्दिष्टसमयानुरोधेन विहिताः। कर्मसु अभीष्टफलानयनाय मुहूर्ताङ्गं प्रवर्तते।

**नित्यदोषाः**

केरलीयचारानुसारेण मुहूर्तविषयान् सङ्गृह्य लिखितः ग्रन्थः भवति मुहूर्तपदवी। पञ्चत्रिंशता श्लोकैः श्रीमता मातूर् नम्पूतिरिपाद्वर्येण रचितः अयं ग्रन्थः। प्रत्येकं कर्म कर्तुं कालस्य गुणदोषचिन्तनमत्र प्रतिपाद्यविषयः। मूहूर्तपदवीग्रन्थे सर्वेषु शुभकर्मसु वर्जनीयाः विंशतिः नित्यदोषाः उच्यन्ते। एकेन श्लोकेन लिखितस्य विश्लेषणमत्र क्रियते।

उल्कोर्वीचलनोपरागगुलिकाः षष्ठाष्टमान्त्येन्द्वसद्
दृष्टारूढविमुक्तराशिसितदृक्सायाह्नसन्ध्यादयः।
गण्डान्तोष्णविषं स्थिरञ्चकरणं रिक्ताष्टमी विष्टयो
लाटैकार्गलवैधृताहिशिरसः सर्वत्र वर्ज्या अमी॥ [5]

उल्कापातः, उर्वीचलनम्, उपरागः, गुलिकोदयः, षष्ठे अष्टमे द्वादशे चन्द्रः, असद्दृष्टारूढविमुक्तराशिः, सितदृक्, सायाह्नं, सन्ध्यादयः, गण्डान्तः, उष्णशिखा, विषघटिकाः, स्थिरकरणम्, रिक्तातिथिः, अष्टमीतिथिः, विष्टिकरणं, लाटः, एकार्गलं, वैधृतम्, अहिशिरः इत्येते विंशतिः दोषाः सर्वेषु शुभकर्मसु वर्जनीयाः।

**उल्कापातः**

आकाशे जाज्वल्यमानेभ्यः केभ्यश्चित् गोलेभ्यः भूमौ पतन्त्यः स्फुलिङ्गशलाकाः

[5]मुहूर्तपदवी- द्वितीयः श्लोकः।

 ISSN : 2277-2359

उल्का इत्युच्यते। अग्निस्फुलिङ्गस्य भूमौ पतनावसरे अग्निशलाका इव आदौ शिरः पृष्ठतः पुच्छं च दृश्यते। ताः सर्वाः भूमौ न पतन्ति। ताः आकाशात् एव भस्मीभूयन्ते। काश्चिदेव भूमौ पतन्ति। ताः उल्काः धूमकेतवः इत्यादिनामभिः व्यवह्रियन्ते। तासां पतनावसरे अन्तरिक्षे प्राणवायोः न्यूनता भवेदित्यतः तस्मिन् समये यागहोमादिशुभकर्माणि न कुर्यादिति। अधीतसांहितिकाः उल्कापातकालं पूर्वमेव अवगच्छन्ति। यदा शुभकर्मारम्भ-समये उल्कापातःदृश्यते तदा ततः आरभ्य दिनत्रयानन्तरं शुभसमये पुनः कर्म कुर्यात्।

**उर्वीचलनम्**

स्वस्थानात् भूमेः चलनम् उर्वीचलनम् इत्युच्यते। भूकम्पः इत्यर्थः। यदा भूचलन-मनुभवति तस्मात् समयादारभ्य दिनत्रयं शुभकर्माणि वर्जनीयानि। अत्र सावनदिनकल्पना एव स्वीक्रियते। उदयादुदयं सर्वत्र दिनकल्पनं स्यात्। यदा शुभकर्मारम्भसमये उल्कापातः भवति तदा ततः आरभ्य दिनत्रयानन्तरं शुभसमये पुनः कर्म कुर्यात्। ज्योतिश्शास्त्रविदः उल्कापातादयः कदा भवन्ति इति ज्ञातुं समर्थाः आसन्।

उल्कापाते च भूकम्पे धूमकेतोश्च दर्शने।
दिनत्रयं विवर्ज्यं स्यात् सर्वेषु शुभकर्मसु॥[6]

**उपरागः**

सुर्यग्रहणं चन्द्रग्रहणं च उपराग इत्युच्यते। ग्रहणारम्भात् दिनत्रयं शुभकर्माणि वर्जनीयानि इति उच्यते।

दृश्यार्धभागस्थितयोर्ग्रहणे शशिसूर्ययोः
ऊर्ध्वं दिनत्रयं वर्ज्यमाचारो दृश्यते तथा। [7]

**गुलिकोदयकालः**

शनेः उपग्रहः भवति मान्दिः। मन्दस्य पुत्रः इत्यस्मात् मान्दिः इति नाम। स एव गुलिकः इत्युच्यते। गुलिकः प्रतिदिनं द्विवारम् उदेति। रविवासरादारभ्य गुलिकोदयकालः उदयात् तथा अस्तात् च एवं भवति –

---

[6]आचारसङ्ग्रहः

[7]आचारसङ्ग्रहः

चन्द्रो रुद्रो जयो विद्या नयस्तेन खनी रवेः।

त्रिंशन्नाड्यह्नि गुलिको दिनपञ्चमवन्निशि॥[8]

| | दिने | रात्रौ |
|---|---|---|
| रविवासरे | 26 नाडिकायाम् | 10 नाडिकायाम् |
| सोमवारे | 22 नाडिकायाम् | 6 नाडिकायाम् |
| मङ्गलवासरे | 18 नाडिकायाम् | 2 नाडिकायाम् |
| बुधवासरे | 14 नाडिकायाम् | 26 नाडिकायाम् |
| गुरुवासरे | 10 नाडिकायाम् | 22 नाडिकायाम् |
| शुक्रवासरे | 6 नाडिकायाम् | 18 नाडिकायाम् |
| शनिवासरे | 2 नाडिकायाम् | 14 नाडिकायाम् |

समरात्रदिनस्य गणना एषा। दिनमानं त्रिंशतः अधिकः वा न्यूनः वा भवति चेत् गुलुकोदयनाडिका X दिनप्रमाणम् अथवा रात्रिप्रमाणम्/ 30 इति गणियक्रियया गुलिकोदय-नाडिका ज्ञातव्या। यस्मिन् राशौ गुलिकोदयः भवति सः राशिः शुभकर्मसु वर्जनीयः।

**षष्ठाष्टमान्त्येन्दुः**

मुहूर्तराशेः षष्ठे भावे अष्टमे भावे द्वादशे भावे च चन्द्रस्य स्थितिः न शुभा। सः राशिः शुभकर्मसु वर्जनीयः। आचारसङ्ग्रहे अपि उच्यते यथा -

रिःफषष्ठरन्ध्रेषु हिमगुसत्तो वर्जनीयः।[9]

**असद्दृष्टारूढविमुक्तराशिः**

पापग्रहदृष्टराशेः पापग्रहस्थितराशेः पापग्रहविमुक्तराशेः च उदयकालः शुभकर्मसु वर्जनीयः। पापग्रहाः रविः, क्षीणचन्द्रः, कुजः, पापग्रहयुक्तः बुधः, शनिः, राहुः, केतुः, मान्दिः च परिगण्यन्ते।

राहुभौमार्कजाः पापाः केत्वर्कौ च परे शुभाः।

वराहमिहिरेण एवम् उच्यते यथा-

---

[8] पञ्चबोधः

[9] आचारसङ्ग्रहः

क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापाः बुधस्तैर्युतः ॥[10]

सर्वेषामपि ग्रहाणां सप्तमभावे पूर्णदृष्टिः अस्ति। ग्रहदृष्टिविषये वराहमिहिरेण एवम् उच्यते–

त्रिदशत्रिकोणचतुरश्रसप्तमानवलोकयन्ति चरणाभिवृद्धितः।

रविजामरेड्यः रुधिराः परे च ये क्रमशो भवन्ति किल वीक्षणेऽधिकाः॥[11]

पापग्रहविमुक्तराशौ यदा कश्चन शुभग्रहः प्रविशति तावत् पर्यन्तं सः राशिः वर्जनीयः। सूर्यविमुक्तराशौ शुभग्रहप्रवेशः नास्ति चेदपि दोषः नास्ति इति उच्यते। यथा-

शुभयोगादेव राशिः पापमुक्तो विशुद्ध्यति।

शुभयोगं विनाप्यर्कः मुक्तराशिस्तु गृह्यते॥[12]

**सितदृक्**

सितः शुक्रः। यद्यपि शुक्रः शुभग्रहः तथापि शुक्रदृष्टिः शुभः नास्ति। पापदृष्टिरिव शुक्रदृष्टिरपि दोषकरः। उदयराशेः सप्तमभावे शुक्रः वर्ज्यः इत्यर्थः।

**सायाह्नम्**

अह्नः पञ्च भागाः सन्ति। ते प्राह्णः, पूर्वाह्णः, मध्याह्नः, अपराह्णः, सायाह्नः इति। अह्नः पञ्चमः भागः नाम षड् नाडिकाकालः शुभकर्मसु वर्जनीयः।

**सन्ध्यादयः**

चतस्रः सन्ध्याः, चतस्रः सूर्यसङ्क्रान्तयः, मृत्युयोगः, दग्धयोगः, धूमकेतुदर्शनं, शिवारुतम् इति सन्ध्यादयः इति आचार्यैरुच्यते[13]। प्रातः सन्ध्या, सायं सन्ध्य, मध्याह्नसन्ध्या, अर्धरात्रसन्ध्या च चतस्रः सन्ध्याः।

| | | |
|---|---|---|
| प्रातः सन्ध्या | – | सूर्योदयात् पूर्वं षड् नाडिकाकालः। |
| सायं सन्ध्या | – | सूर्यास्तात् परं षड् नाडिकाकालः। |
| मध्याह्नसन्ध्या | - | दिनमध्यात् पूर्वं परं च पञ्च पञ्च विनाडिकाकालः। |

[10]बृहज्जातकम्

[11]बृहज्जातकम्

[12]आचारसङ्ग्रहः

[13]वरदीपिका व्याख्या

 ISSN : 2277-2359

अर्धरात्रसन्ध्या - रात्रिमध्यात् पूर्वं परं च पञ्च पञ्च विनाडिकाकालः।

मध्याह्ने चार्धरात्रे च सन्ध्ययोरुभयोरपि
न कुर्यात् शुभकर्माणि सिद्धिं नाप्नोति वै ततः॥[14]
मध्याह्ने चार्धरात्रे च वर्ज्या दश विनाडिकाः।[15]

**सूर्यसङ्क्रान्तिः**

राशिसङ्क्रान्तिः, बिम्बसङ्क्रान्तिः, अयनसङ्क्रान्तिः, विषुवत्सङ्क्रान्तिः इति चतुर्धा सङ्क्रान्तेः विभागः कृतः।

सूर्यसङ्क्रान्तिः – स्फुटगत्या सूर्यस्य मेषादिराशेः अग्रिमराशिप्रवेशकालः।

बिम्बसङ्क्रान्तिः – राशिसङ्क्रान्तेः पूर्वं परं च षोडश षोडश नाडिकाः मिलित्वा द्वात्रिंशत् नाडिकाकालः।

अयनसङ्क्रान्तिः – कर्कटकसङ्क्रान्तिः, मकरसङ्क्रान्तिः च।

विषुवत्सङ्क्रान्तिः – तुलसङ्क्रान्तिः, मेषसङ्क्रान्तिः च।

सूर्यसङ्क्रान्तिकालः दिने चेत् दिनं पूर्णं तथा रात्रौ चेत् पूर्णा रात्रिः च वर्जनीये। बिम्बसङ्क्रमकालः शुभकर्मसु वर्जनीयः। अयनसङ्क्रान्तेः पूर्वं परं च दिनत्रयं दिनत्रयं च तथा विषुवत्सङ्क्रान्तेः पूर्वं परं च एकैकं दिनं च वर्जनीम्।

यस्मिन् दिनेऽर्कसङ्क्रान्तिस्तद्दिने कर्म वर्जयेत्।
यद्रात्रौ सङ्क्रमस्तस्य रात्र्यां कर्म विवर्जयेत्॥
रविसङ्क्रमणात् पूर्वं परतश्चापि षोडश।
घटिकाश्च विवर्ज्याः स्युस्सर्वेषु शुभकर्मसु॥
अयने विषुवत्यन्यास्वर्कसङ्क्रान्तिषु क्रमात्।
त्रिदिनैकदिनस्त्रिंशन्नाड्यास्त्याज्याः स्वपार्श्वयोः॥[16]

---

[14]आत्रेयसंहिता।

[15]आचारसङ्ग्रहः।

[16]मुहूर्तरत्नाकरः।

**मृत्युयोगः**

रविवारे मघानक्षत्रं, सोमवारे विशाखानक्षत्रं कुजवारे आर्द्रानक्षत्रं, बुधवारे मूलानक्षत्रं, गुरावारे शततारानक्षत्रं, शुक्रवारे रोहिणीनक्षत्रं शनिवारे उत्तराषाढनक्षत्रं, च यदा भवति तदा मृत्युयोगः इत्युच्यते।

मृत्युयोगमघाशूर्परौद्रमूलप्रचेतसः
रोहिणी चोत्तराषाढा युक्ताः सूर्यादिवासरैः॥[17]

**दग्धयोगः**

रविवारे द्वादशी तिथिः, सोमवारे एकादशी तिथिः, कुजवारे पञ्चमी तिथिः, बुधवारे द्वितीया तिथिः, गुरुवारे षष्ठी तिथिः, शुक्रवारे अष्टमी तिथिः, शनिवारे नवमी तिथिः च यदा भवति तदा दग्धयोगः इत्युच्यते।

बुधद्वितीया कुजपञ्चमी च षष्ठीगुरोरष्टमी शुक्रवारे
एकादशीचन्द्रशनिर्नवम्यां द्वादशीचार्केण इह दग्धयोगः॥[18]

मृत्युयोगदग्धयोगदिने पूर्णतया शुभकर्म न वर्जनीयम् इति उच्यते। सूर्योदयादारभ्य यामार्धकालः एव वर्जनीयः। यामार्धकालस्तु 3 नाडिका 45 विनाडिका।

तिथिर्वारर्क्षयोगानां फलमर्कोदयादितः।
अर्धयामात्परं नास्ति शुभं वाप्यशुभं च तत्॥[19]

**धूमकेतुदर्शनम्**

धूमकेतोः उदयः यस्मिन् दिने दृश्यते तस्याः रात्रेः आरभ्य दिनत्रयं शुभकर्मसु वर्जनीयम्।

सधूमके तु जनने त्रयमह्नां विवर्जयेत्। [20]

---

[17]मुहूर्तपदव्याः वरदीपिकाव्याख्यायाम्।

[18]मुहूर्तपदव्याः वरदीपिकाव्याख्यायाम्।

[19]मुहूर्तपदव्याः वरदीपिकाव्याख्यायाम्।

[20]माधवीयम्।

 ISSN : 2277-2359

**शिवारुतम्**

जम्बूकस्य क्रोशनशब्दः शिवारुतम् इत्युच्यते। अयं कश्चन उत्पातः भवति। यदृच्छया सम्भवति इदम्। शिवारुतं यस्मिन् दिने श्रूयते तद्दिनं सम्पूर्णं शुभकर्मसु वर्जयेत्। अस्य न कोऽपि कालनियमःतस्मात् शुभकर्मसु शिवारुतश्रवणं भवति चेत् प्रायश्चित्तकर्मणा देषपरिहारं कुर्यादित् आचार्यमतम्।

शिवारुतादयो दोषाः वर्जनीयाः शुभेऽखिले।[21]

**गण्डान्तः**

रेवतीनक्षत्रस्य अन्त्यपादादारभ्य अश्विनीनक्षत्रस्य प्रथमपादान्तं त्रिंशन्नाडिका-कालः प्रथमो गण्डान्तः। आश्लेषानक्षत्रस्य अन्त्यपादादारभ्य मघानक्षत्रस्य प्रथमपादान्तः द्वितीयो गण्डान्तः। ज्येष्ठानक्षत्रस्य अन्त्यपादादारभ्य मूलनक्षत्रस्य प्रथमपादान्तः तृतीयः गण्डान्तः। त्रयः गण्डान्ताः शुभकर्मसु वर्जनीयाः।

अश्वीमूलमघाद्यंशाः पूषाहीन्द्रान्त्यपादकाः
एते नक्षत्रगण्डान्ताः विवर्ज्याः सर्वकर्मसु॥[22]

**उष्णशिखा**

अश्विन्यादिनक्षत्रेषु निश्चितः नाडिकाकालः उष्णशिखाख्यः कश्चित् दोषविशेषः निर्दिष्टः। उक्तञ्च

अश्व्यां यामोद्वितीयः शरमितघटिका याम्यभेऽन्त्ये नवस्युः
नाड्यो द्वाविंशदाद्याः शिखिनिपवनभान्तं तथा त्रिस्त्रिरेवम्
शूर्पास्याद्येऽष्ट नाड्यो वसुमितघटिका मैत्रभेऽन्त्ये दशस्युः
नाड्योऽधः शक्रभार्धात् पुनरपि निर्ऋतेस्त्रिस्त्रिरेवं तथोष्णम्॥[23]

यस्मिन् राशौ उष्णशिखास्पर्शः भवति सः राशिः पूर्णतया शुभकर्मसु वर्ज्यते चेत् शोभनमिति इति उच्यते आचार्यैः।

---

[21]मूहूर्तपदवीव्यादीपकव्याख्यायाम्।

[22]मुहूर्तपदवीवरदीपिकाव्याख्यायाम्।

[23]मुहूर्तभाषाव्याख्यायाम्

 ISSN : 2277-2359

**विषघटिका**

अश्विन्यादिनक्षत्रेषु प्रत्येकं प्रत्येकं निर्दिष्टाः चतस्रः चतस्रः नाडिकाः विषघटिका-कालः इत्युच्यते। तासां कालः शुभकर्मणि वर्ज्यः।

अङ्गेनैव वियत्पयो निलनरोरागीनगंनाखुना
दिव्यं राष्ट्रनरो भयोविटनटो वाद्यैर्नरो वीरनुत्॥
निष्ठा नित्यनयोदकं तुकविराट् निम्बा निशावक्रनुत्।
हव्याशादिषु तानतीत्य परतो नाड्यश्चतस्रो विषम्॥[24]

**स्थिरकरणम्**

कृष्णपक्षचतुर्दश्याः उत्तरार्धादीनि शुक्लपक्षपूर्वार्धान्तानि क्रमेण शकुनि, चतुष्पात्, नागः, किंस्तुघ्नम् इति चत्वारि स्थिरकरणानि। तेषां कालः शुभकर्मसु वर्ज्यः।

स्थिरकरणान्यसितचतुर्दश्यपरार्धादीनि चत्वारि
प्राहुः शकुनिचतुष्पाद्विरसकिंस्तुघ्ननामानि॥[25]

**रिक्ता तिथिः**

शुक्लपक्षे कृष्णपक्षे च चतुर्थी नवमी चतुर्दशी इति तिस्रः तिथयः रिक्ताख्याः। तासां तिथीनां कालः शुभकर्मसु वर्जनीयः।

नन्दा भद्रा जया रिक्ता पूर्णेति तिथयक्रमात्।
पुनः पुनर्विपश्चित्भिः कथिता प्रथमादिकाः॥[26]

**अष्टमी तिथिः**

शुक्लपक्षे कृष्णपक्षे च अष्टमी तिथिः शुभकर्मसु वर्ज्या। कृष्णाष्टमी विवाहमुहुर्ते शुभः भवति इति उच्यते मुहूर्तपदवीकारेण इष्टाः कृष्णाष्टमी[27] इति श्लोकेन।

---

[24]मुहूर्तपदव्याः वरदीपिकाव्याख्याने।

[25]माधवीयम्

[26]मुहूर्तपदव्याः वरदीपिकाव्याख्याने।

[27]मूहूर्तपदव्याः षष्ठः श्लोकः।

**विष्टिकरणम्**

तिथ्यर्धमेव करणम् इति उच्यते। स्थिरकरणानि चत्वारि तथा चरकरणानि सप्त च सन्ति। तेषु सप्तसु चरकरणेषु एकं करणं भवति विष्टिकरणम्।

शुक्लप्रतिपदन्त्यार्धात् करणानि पुनः पुनः।
सिंहव्याघ्रवराहश्च खरेभपशुविष्टयः॥ [28]

**लाटम्**

सूर्यचनद्रयोः रश्मिसङ्घट्टनात् नक्षत्रेषु जायमानः दोषविशेषः भवति लाटः। अयं गणितक्रियया अवगन्तव्यः। सामान्यतः चन्द्रार्कयोगः 4,5,10,11 राशिषु भवति चेत् लाटः भवेदिति। लाटबाधितक्षत्रं पूर्णतया शुभकर्मसु वर्जनीयम्।

लाटवैधृतयोर्मध्यं यद्दक्षे तद्विवर्जयेत्
दन्तादूनं च यस्मिन् स्यात् तद्दक्षं च न शोभनम्।[29]

**एकार्गलम्**

तत्कालसूर्यस्फुटं द्वादशराशिभ्यः न्यूनीकृत्य तत्स्फुटं यस्मिन्नक्षत्रे भवति सः एकार्गल-दोषयुक्तं नक्षत्रं भवति। प्रस्तुतनक्षत्रे यावन्नाडिकाः गताः तावन्नाडिकाः शुभकर्मसु वर्ज्याः।

मण्डलहीनरवेः स्याद् रत्नासननित्पूज्यभयतुल्यो
दैत्यनरर्क्षे तस्मिन्नादौ नाडीसमोर्गलो वर्ज्यः।[30]

**वैधृतम्**

लाटस्य आरम्भात् परं दशमे दिनं वैधृतं भवति। सः अपि कश्चन नक्षत्रदोषः। वैधृतः प्रस्तुतनक्षत्रे यावन्नाडिकाः गताः तावन्नाडिकाः शुभकर्मसु वर्ज्याः। सः अपि गणितक्रियया अवगन्तव्यः भवति। सायनरवेः सायनचन्द्रस्य च स्फुटं गोलान्ते यदा भवति तदा एव लाटवैधृतौ भवतः। अनयोः व्यतीपातः इति नामान्तरं वर्तते।

---

[28]मुहूर्तपदव्याः वरदीपिकाव्याख्यायाम्

[29]मुहूर्तपद्वयाः वरदीपिकाव्याख्यायाम्।

[30]माधवीयम्

**अहिशिरः**

अहिशिरः सार्पमस्तकमिति नाम्ना व्यवह्रियते। सोऽपि कश्चन नक्षत्रदोषः। तत्काल-सूर्येन्दुस्फुटयोर्योगे यदा अनुराधानक्षत्रस्य उत्तरार्धे तिष्ठति तदा सार्पमस्तकदोषः। उक्तञ्च -

चन्द्रार्कयोगे मैत्रान्त्यदलं स्यात् सार्पमस्तकः[31]

सार्पमस्तकदोषः यस्मिन् समये भवति सः कालः व शुभकर्मसु वर्जनीयः।

**उपसंहारः**

प्रकृतिसम्भवदोषाः, राशिदेषाः, नक्षत्रदोषाः, अन्यदोषाः च मिलित्वा विंशतिः नित्यदोषा उक्ताः। एते दोषाः शुभकर्मसु वर्जनीयाः इति एतदतिरिच्य षड् दोषादयः अन्ये अपि दोषाः इक्ताः मुहूर्तपदवीग्रन्थे। मुहूर्तविचिन्तने ते तोषाः अपि परिगणनीयाः एव। देशाचाराभेदेन मुहूर्तविचारः भिद्यते। किन्तु विभिन्नग्रन्थेषु आचार्येण उक्तविषयाणां सारः भवति मुहूर्तपदवीकारेण सूचिताः अयं नित्यदोषाः। अत्र उक्तान् नित्यदोषान् त्यक्त्वा मुहूर्तः स्वीक्रियते चेत् तत् कर्म शुभाय न परिकल्पते।

**परिशीलितग्रन्थसूची**

1. गोपालप्पणिक्कर् एन् (डो.) - पञ्चबोधः, प्रथमभागः, विवरणव्याख्या, एम्.एम्.प्रस्, तिरुवनन्तपुरम्, 2002.
2. गोपालपणिक्कर् (डो.) - मुहूर्तपदवी, दीपिकाव्याख्या, विद्यापीठं बुक्स्, तिरुवनन्तपुरम्, 2009.
3. नीलकण्ठशर्मा पुन्नश्शेरी - प्रश्नमार्गः, पूर्वार्धम्, देवीबुक्स्टाल्, कोटुङ्ङल्लूर् 2004.
4. मात्तूर् नम्पूतिरिप्पाड् - मुहूर्तपदवी, पञ्चाङ्गं पुस्तकशाला, कुन्नङ्कुलम्, 2005.
5. माधवाचार्यः - माधवीयम्, एस् टि.रेट्टियार् आन्ट् सण्स्, तिरुवनन्तपुरम्, 2005.
6. रामदैवज्ञः – मुहूर्तचिन्तामणिः, चैखम्बा संस्कृत संस्थान्, वाराणसी, 2006.
7. रामजन्ममिश्रः - नारदसंहिता, व्याख्या, चौखम्बा संस्कृतसंस्थानम्, वाराणसी, 2001.
8. वराहमिहिराचार्यः - बृहज्जातकम्, मोत्तिलाल् बनारसीदास्, वाराणसी 1994.

[31] मुहूर्तभाषाळ्याख्यायाम्

 ISSN : 2277-2359

9. विश्वेश्वरी आम्मा के.- आचारसङ्ग्रहः, ओरियन्टल् रिसर्च् इन्स्टिट्यूट्, तिरुवनन्तपुरम्, 1981.

10. शङ्करन् नम्पूतिरिप्पाट् काणिप्पय्यूर्, वरदीपिका व्याख्या - कालदीपकम्, मुहूर्तपदवीव्याख्या, पञ्चाङ्गं बुक्स्, तृशूर् 2006.

# महाभारते नृपांशग्रहणस्य सामान्यतत्त्वानि

डा.के.रतीष्
सहायकाचार्यः, संस्कृतविभागः
सर्वकारीयसंस्कृतविद्यालयः, तिरुवनन्तपुरम्

**उपक्रमः**

सुस्थिरस्य समृद्धस्य च राष्ट्रस्य निदानं सम्पत्तेः सदुपयोगः एव। अत एव राष्ट्रे कोशस्य स्थानमतीवप्राधान्यमर्हति। प्राचीनभारतीयराष्ट्रमीमांसकाः राज्ञः सप्त रक्ष्येषु अन्यतमत्वेन कोशमङ्गीकुर्वन्ति।[1] राष्ट्रस्य मुखमेव कोशः इति शुक्राचार्योऽपि गणयति।[2] राष्ट्रस्य प्रतिरोधः, भरणव्यवस्थायाः सम्यक् परिपालनं, भरणनिर्वहणम् इत्यादयः कोशम् आश्रित्येव तिष्ठन्ति। एवञ्च राष्ट्रस्य सुस्थितेः कोशवृद्धिः अनिवार्या एव। तस्मादेव महाभारते एवमुक्तमस्ति यत् राजानः सर्वदा कोशस्य वृद्ध्यर्थमत्युत्साहेन यत्नः करणीयः। राज्यपरिपालने राज्ञः आश्रयः कोशः सेना च स्तः। तत्र च सेना परिपालनं कोशमाश्रित्यैव तिष्ठति। तावदस्ति राजानं प्रति कोशस्य प्राधान्यम्। सज्ञः सर्वस्यापि धार्मिकमूल्यानामाधारः केश एव। प्रजानां प्रतिष्ठा च राज्ञः धार्मिकमूल्यानि सन्ति। एवञ्च कोशादेव राज्ञः सर्वविधाः अपि अभिवृद्धयः भवन्ति। कोशः शुष्कश्चेत् राज्ञः सेनायाः क्षयः एव भवति। अतः राज्ञा तस्य कोशस्य पूर्णतया पूरणं करणीयं विद्यते।

कोशस्य द्विगुणीकरणमेव राज्ञः सुप्रधानं कर्तव्यमिति महाभारतं वदति। एवञ्चेत् कोशहानिः कदापि न भवेत्। कोशविहीनस्य राज्ञः राष्ट्राभिवृद्धिः असाध्या एवेति इतिहासकारस्य मतम्। दरिद्राय राज्ञे न कोऽपि आदरं ददाति। अतः एव कोशस्य पूरणं पोषणं च राज्ञः धर्मः भवति।

**नृपांशानां श्रोतांसः**

कृषिः, गोपरिपालनं, वाणिज्यञ्च राजकीयकराणां मुख्यानि प्रभवस्थानानि भवन्ति। एवञ्च अपराधिनां दण्डधनानि अपराधिभ्यः अपहृतधनानि च कोशपूरणे सहायकं भवति। वाणिज्यवस्तूनामुपरि च नृपांशाः निर्दिष्टाः सन्ति। मूलादधिकयोः पशुहिरण्ययोः पञ्चाशद्

भागः राज्ञा आदेयः इति मनुः निर्दिशाति। एवं धान्यानामष्टमः द्वादश वा भागः राज्ञा ग्राह्यः[3]। भूमेरुत्कर्षापकर्षामाश्रित्य, कर्षणादिक्लेशलाघवगौरवमाश्रित्य च एवायं बह्वल्पग्रहण-विकल्पः निर्दिष्टोऽस्ति। हिरण्योपरि कोशपूरणार्थं करग्रहणं कौटिल्यः अपि निर्दिशति[4]। पौराणां रक्षणाय बह्वल्यमेव वसु तेभ्य एव सहसा आददीत इति महाभारते सूचितं विद्यते। सर्वदा कोशस्य संवर्धनं कार्यमित्येव भीष्मस्योपदेशः अस्ति।[5]

अपराधिषु दण्डरूपेण शुल्काः दत्ताः सन्ति। एते कोशपूरणस्यापरः उपायः भवति। हिरण्यबहुलः दण्डरूपेण दातुमर्हति इति महाभारतमुपदिशति -

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्।
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम्॥[6]

इति चोक्तं महाभारते। कौटिल्योऽपि स्वस्यार्थशास्त्रे दण्डरूपेण धनं स्वीकृत्य कोशपूरणम् उपदिशति[7]। एवं शुक्रनीत्यामपि दण्डं कोशवृद्धिमार्गेषु अन्यतमरुपेण सूचयति[8]। आकरे लवणे शुल्के तरे नागबले च आप्तान् अमात्यान् न्यसेदिति अन्यान् धनागममार्गानुपदिशति भीष्मः शन्तिपर्वणि।

उपहाराः एव कोशपुरणप्रयोजकः अन्यः उपायः। अन्येभ्यः राजभ्यः सामन्तेभ्यः पौरप्रमुखेभ्यश्च उपहारान् स्वीकृत्यापि कोशवृद्धिं कर्तुं शक्यते। एवं युद्धे पराजितेभ्यः राज्येभ्यः करार्थम् आनीतानि वस्तून्यपि कोशस्य पूरणं करोति। राजसूयादियागावसरेषु बलिरुपेण सामन्तेभ्यः धनं स्वीकृत्य कोशवर्धनं करोति।

कोशस्य स्थूलीकरणाय राज्ञः केचन विशेषाधिकाराः च सन्ति। तेष्वन्यतमं भवति बलेन धनस्यापरहरणम् । तदुक्तं महाभारते 'धनं हि क्षत्रियस्यैव द्वितीयस्य न विद्यते' इति[9]। एतदनुसृत्य यः धर्मानुष्ठानं न करोति तस्य सर्वस्वं बलादपहर्तुं क्षत्रियः योग्यः अस्ति। तच्च धनं बलार्थं यज्ञार्थं च स्यात्।

**नृपांशग्रहणम्**

कररुपेण धनसमाहरणस्यातीवप्राधान्यमस्ति। करनिश्चयः अधिकारिणः स्वेच्छया कर्तुं न शक्यते। किन्तु तदर्थं नियमाः व्यवस्थाश्च सन्ति। शास्त्राधिष्ठिताः कराः अनतिक्रमणीयाः

दोषरहिताः च भवन्ति। यः राजा अशास्त्रदृष्टैः करैः प्रजान् पीडयति सः अपशास्त्रपरः लुब्धश्च भवति इति महाभारते तादृशं राजानं दुष्यति। अत एव अधर्मेण मार्गेण करग्रहणं नाभीष्टम्। यः तु यथावत् द्रव्याणि अभ्याहरति प्रवृत्तधर्मस्य तस्य यशोऽभिवर्धते। एवञ्च भरणनिर्वहणाय धनस्वीकारार्थं कानिचन तत्त्वानि महाभारते सूचितानि सन्ति।

**करग्रहणस्याधारः**

प्रजानां सुरक्षापरिपालनं राज्ञां मुख्यो धर्मः भवति। एतस्य प्रत्युपकाररूपेण जनानामात्मीयोत्कर्षाणामंशः राज्ञः लभते। एवं करग्रहणस्याधिकारश्च राज्ञेऽस्ति। अयमेव राज्ञः करग्रहणस्य अधिष्ठानाशयः भवति। अर्थात् राजा प्रजानां संरक्षणं ददाति। प्रजास्तु तादृशस्य संरक्षणस्य मूल्यरूपेण करं ददाति। वस्तुतः राजा प्रजानां संरक्षकः सेवकः एव इत्याशयः। तादृशस्य सेवनस्य वेतनमेव करेऽस्ति। प्रजानां सम्पत्तेः षष्ठांशं स्वीकृत्य तेषां संरक्षणं यः राजा न करोति सः पापयुक्तः भवति। करं स्वीकृत्य प्रजापरिपालनं करणीयम् इत्येव सिद्धान्तः। उक्तं च मनुना – योऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः। प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत्[10]।

**नृपांशभारः**

सर्वेऽपि जनाः राज्ञः संरक्षणमर्हन्ति। किन्तु ते सर्वे न करं दातव्याः सन्ति। ब्राह्मणाः क्षत्रियाः च करं न यच्छन्ति। वस्तुतः वैश्याः एव केवलं करं दातुं निश्चिताः भवन्ति। ये प्रजाः कृषिगोरक्ष्यवाणिज्यं कुर्वन्ति तेषां संरक्षणमधिकमावश्यकम्। अत एव ते जनाः करं दातुमर्हन्ति।

सामान्येन सर्वेषामपि राज्ञः संरक्षणं लभते। तथापि करः वैश्यस्यैव धर्मः अस्ति। तत्र हेतुरयमेव, ब्राह्मणानां धर्मः पौरोहित्यमेव। तत्र च भौतकोत्पादनक्षमता न विद्यते। क्षत्रियास्तु सदा युद्धेषु शत्रुनाशनेषु च व्यापृताः। ते स्वयं संरक्षकाः एव न संरक्षणीयाः। शूद्रास्तु सदैव सेवकाः। तेषां कृते न गवादि धनं विद्यते। अत एव कर्षकाः वणिजः गोपालकाश्च वैश्याः राज्ञे करं दातुमर्हन्ति। एवञ्च ये ब्राह्मणाः स्वधर्मं परित्यज्यान्यधर्मान् सेवन्ते तेभ्यः हीनकोशः राजा बलिं स्वीकरोति।

**नृपांशधनम्**

शास्त्रेषु निर्दिष्टेभ्योऽधिकं धनं कररुपेण स्वीकर्तुं राजा नार्हति। राज्ञः धनस्य मुख्याधारः कार्षिकोत्पन्नानां निश्चितभागः भवति। मनुरपि एवं वदति यत् क्षीणधनोऽपि राजा श्रोत्रियब्राह्मणात् करं न गृह्णीयात् इति। वैश्यानां वाणिज्यवस्तूनाश्रित्य भागस्य भेदः भवत्येव। पशुहिरण्ययोः पञ्चाशद्भागः राज्ञा ग्रहीतव्यः। धान्यानां षष्ठोऽष्टमो द्वादशो वा भागः ग्राह्यः। वृक्षादीनां लाभात् षष्ठः भागः ग्रहीतव्याः। महाभारतेऽपि एतदुक्तमस्ति यद् 'बलिषड्भागमुद्धृत्य बलिं समुपयोजयेत्'[11] इति एकस्मिन् संवत्सरे एकस्य पुरुषस्य या सम्पत्तिः लभते तस्याः षड्भाग एव कररूपेण दातव्यः। अत एव करः कस्यापि अधिकभारः नास्ति।

**आकस्मिकनृपांशाः**

राष्ट्रसम्पत्तेः संरक्षकः एव राजा। राज्ञा राष्ट्रेन च आपदि परस्परं संरक्षा नित्यं कर्तव्या इति महाभारतं निर्दिशति। आपदि अधिककरं ग्रहीतं राज्ञोऽधिकारः नास्ति। किन्तु तादृश अवसरेषु अधिकधनं वोढुं याजना एव राजा करोति। तदर्थं राजा सर्वदा जनेषु प्रीतिमान् भवेत्। सत्यमार्जवमक्रोधमानृशस्यं च पालयेत्। सत्यार्जवपरः राजा मित्रकोशबलान्वितः भवति।

आकस्मिकावसरेषु दुरितेषु प्रकृतिदुरन्तेषु च राष्ट्रस्यातिजीवनाय आकस्मिककरान् ग्रहीतुं शक्यते। तादृशावसरेष्वपि कोशस्य सैन्यस्य च अभिवृद्धिः कार्या। राज्ञः राज्य-धर्मादीनामनुष्ठानं सर्वदापि सेनामाश्रित्येव तिष्ठति। राज्ञः राष्ट्रधर्माः प्रजानां कृते एव भवति। तस्मात् दुरितकालेषु अपि कोशपूरणमावश्यकमेव। अतः दुरन्तेषु आकस्मिककररूपेण धनार्जनं कर्तव्यमस्ति। सर्वप्रकारेष्वपि कोशस्थूलीकरणं कार्यम्। तच्च यज्ञार्थं यूपछेदः इवास्ति। यूपार्थं वृक्षछेदावसरे समीपस्थाः द्रुमाः अपि छिन्दन्ति। एवं कोशस्य परिपन्थिनः महतः नराः अपि पीडिताः भवन्त्येव। तादृशावसरेषु राजा प्रजानां रक्षिता हन्ता च भवति।

**नृपांशग्रहणस्य सामान्यतत्त्वानि**

जनेभ्यः नृपांशग्रहणाय राजा दत्तश्रद्धः भवेत्। सः आयव्ययौ दृष्ट्वा नित्यमुद्यतदण्डः स्थातव्यः भवति। लोके जनाः तालाम्बुशेखरणाय प्रवृद्धं तालवृक्षमेवोपगच्छन्ति, न सु

 ISSN : 2277-2359

बालवृक्षम्। एवं राजापि करग्रहणाय धनिकानेव उपगन्तव्यः, न तावत् दरिद्रान्। एवञ्च अनावृष्टिकाले जनेभ्यः करग्रहणं वर्जनीयं भवति। तादृशावसरेषु करं प्रदातुं जनाः असमर्थाः भवेयुः। तस्मात् ऋतुमनुसृत्य प्रदेशानां नराणं च स्थितिं विलोक्य एव करः स्वीकार्यः। एवञ्च राजा करग्रहणार्थं तृष्णया न यत्नः कर्तव्यः। तादृशतृष्णा राज्ञः जनानाञ्च मूलं छेदयति। राजा वत्सस्य स्तन्यपानमिव जनेभ्यः करग्रहणं कार्यम्। तदुक्तम् – वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत्[12] इति।

**नृपांशानां वृद्धिः**

जनानामभिद्रोहं विनैव करग्रहणं पालनीयम्। यथा भ्रमराः पादपेभ्यः मधुदोहं कुर्वन्ति तद्वते राजा जनानां सेवनं कुर्यात्। जलौकसः यथा रक्तं पिबन्ति तथा राजा जनेषु वर्तेत। यथा व्याघ्री स्वपुत्रान् हरेत् तद्वदेव राजापि वर्तनीयः। सा पुत्रान् संदशेत् न तु पीडयेत्। एवमेव राज्ञः प्रजापालनमपि भवेत्। यथा शल्यकवानाखुः सदा अन्येषां पदं धूनयते तथा अतीक्ष्णेनाभ्युपायेन एव राजा राष्ट्रं समापिबेत्। अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत्। ततः भूयः क्रमवृद्धिं समाचरेत्। राज्ञा अल्पाल्पः करः एव राष्ट्रात् ग्रहीतव्यः इति मनुरपि निर्दिशति।

सामान्यावसरेषु दण्डरूपेण करं ग्रहीतुं नार्हति राजा। शास्त्रेषु अनिर्दिष्टं करमपि ग्रहीतुं न शक्यते। शास्त्रविरुद्धेन करेण यः राजा कोशाभिवृद्धिं करोति सः नश्यति। तदुक्तं महाभारते –

नित्योद्विग्नाः प्रजाः यस्य करभारप्रपीडिताः।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम्[13]॥

अयोगेन करेण पीडितं राष्ट्रं न विवर्धते। अशास्त्रदृष्टैः करैः प्रजापीडनं स्वयमात्मनः हिंसा एव भवति। अनृजलुब्धः राजा क्षिप्रं स्वजनेनैव वध्यते।

करसमाहरणात्पूर्वं प्रजानां सामान्याभिप्रायमन्विषति राजा केषुचित्सन्दर्भेषु। एवञ्च सामान्यजनानां विरोधं परिहर्तुं तेषां सम्मतिं प्राप्तुं च शक्यते। एतादृशावसरेषु अधिकधनस्य

आवश्यकता जनान् बोधनीया वर्तते। समुत्पन्ने आपदि, परचक्रभये महदि चैवं कर्तुं शक्यते।

**लाभे नृपांशः**

वणिजां योगक्षेमं सम्प्रेक्ष्य तेषु कराने कारयेत्। शिल्पानामुत्पत्तिं दानवृत्तिं च वीक्ष्य शिल्पं शिल्पिनः प्रति च करान् कारयेत्। तेषामनास्थायामकाले च तेभ्यः करान् न निपातयेत्। फलं कर्म च सम्प्रेक्ष्य एव सर्वान्करान् प्रकल्पयेत्। एष एव मनोरप्यभिमतः सिद्धान्तः। उक्तं च मनुना –

क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम्।
योगक्षेमं च संप्रेक्ष्य वणिजो दापयेत्करान्[14]॥ इति।

**उपसंहारः**

राष्ट्राभिवृद्ध्यर्थं कोशस्य वित्तसमाहरणस्य च स्थानमद्वितीयमेव। महाभारतस्य शान्तिपर्वणि भीष्मः अनेकानुपदेशान् ददाति एतस्मिन्विषये। राष्ट्रे कोशमाश्रित्यैव सैन्यपुष्टिः प्रजापरिपालनं च भवति। कोशस्य स्थूलीकरणाय नृपांशस्य समाहरणमावश्यकमेव। विविधाः कराः, दण्डनिधिः, अपहृतधनानि च कोशपूरणप्रयोजकाः भवन्ति। एवं उपहाराः बलः इत्यादयः अपि कोशपूरकाः सन्ति। करान् स्वीकृत्य राष्ट्रसंरक्षणं राज्ञां परमो धर्मो भवति। नृपांशग्रहणे कानिचन सामान्यतत्त्वानि च विद्यन्ते।

**सन्दर्भाः**

1.महाभारतम् – XII.69.64
2.शुक्रनीतिः – I. 61
3.मनुस्मृतिः – VII.130
4.अर्थशास्त्रम् – I. 13.7
5.महाभारतम् – XII.69.26
6.तत्रैव – XII.71.10
7.अर्थशास्त्रम् – IV. 9. 31-32,34
8.शुक्रनीतिः – II. 325
9.महाभारतम् – XII.136.3
10.मनुस्मृतिः – VIII. 307
11.महाभारतम् – XII. 139.100
12.तत्रैव – XII.88.4
13.तत्रैव – XII.139.109
14.मनुस्मृतिः - VII. 127

## सहायकग्रन्थसुची

1. Mahabharata (with English Translation), M.N.Dutt,Parimal Publications, Delhi, 2013.
2. मनुस्मृतिः (मन्वर्थमुक्तावल्या समन्विता), कुल्लूकभट्टाः, निर्णयसागरमुद्रणयन्त्रालयः, मुम्बई, 1946.
3. शुक्रनीतिः, महर्षिशुक्राचार्यः (2.Vol.) चौखम्बा सुरभारती प्रकाशन, वारणसी।
4. अर्थशास्त्रम्, कौटिल्यः, एल्.एन्. रङ्गराजः (Ed.) पेन्गिन् बुक्स्, नवदिल्ली, 1987.

# पण्डितराजजगन्नाथसम्बन्धमं लवङ्गीवृत्तान्तम् – एकः विमर्शः

**डा. दीपङ्कर-मण्डलः**

सहायकाचार्यः, छत्ररामै पण्डितमहाविद्यालयः,

बङ्कुरा, पश्चिमबङ्गदेशः

**कुञ्चिकापदानि**

किंवदन्ती, यवनरमणी, जातिच्युतः,लवङ्गी, गङ्गालहरी।

**शोधसारः**

पण्डितराजजगन्नाथः काव्यशास्त्रस्य, वैयाकरणशास्त्रस्य, न्याय-वेदान्त-मीमांसायाः पण्डितः आसीत्। संस्कृतकाव्यशास्त्रेतिहासे जगन्नाथस्य पाण्डित्यं यथा सर्वत्रासीत् तथैव तस्य जीवनवृत्तान्तं पण्डितानां, विदुषां, जिज्ञासुपाठकानाम् अत्याग्रहोत्पादकः विषयः भवति। पण्डितराजस्य समग्रजीवनं वहुकिंवदन्तीभिः परिपूर्णमस्ति। यथार्थप्रमाणाभावे पण्डितराजस्य जीवनस्य वृहदांशः कल्पनाप्रसुतैव। तासु किंवदन्तीषु लवङ्गीसम्बन्धा किंवदन्ती सर्वजनप्रसिद्धा। लवङ्गीविषयमाश्रित्य यथा समर्थनः दृश्यते तथैव प्रवलविरोधी-तापि परिलक्ष्यते। अतः सत्यासत्यविषयमधिकृत्य लवङ्गीसम्बन्धं प्रकृततथ्यमुपस्थापनार्थं विविधग्रन्थानामनुशीलनेन कार्यमिदं प्रस्तूयते मया।

**उपोद्घातः**

पण्डितराजजगन्नाथः समग्रसंस्कृतसाहित्याकाशे देदीप्यमाननक्षत्रमण्डलेषु चिर-भास्वरः भवति। काव्यशास्त्रपरम्परायाम् अन्तिमाचार्यरूपेणापि पण्डितराजजगन्नाथः प्रसिद्धः सर्वशास्त्रज्ञः मौलिकचिन्तनक्षमश्च भवति, येन संस्कृतकाव्यशास्त्रे नूतनदिग्दशनं सम्पादितम्। तत्रभवतः पण्डितराजस्य जन्मः तैलङ्गब्राह्मणपरिवारे अभवत्[1]। पेरुभट्टः आसीत्तस्य जनकः, माता च लक्ष्मीदेवी[2]। पण्डितराजेन तस्य ग्रन्थमध्ये परमादरेण माता-माता-पिताविषयकतथ्यं प्रदत्तम्। यद्यपि मातुर्नामविषये कोऽपि सन्देहः नास्ति, परन्तु

---

[1] प्राणभरणम्, ५३

[2] रसगङ्गाधरः, १/३

पण्डित-राजस्य पितुर्नाम सर्वत्र समरूपेण न प्राप्यते खलु। पेरुभट्टः तथा पेरमभट्टः इति नामद्वयोः मध्ये वहुमतभेदः पण्डितपरिसरे दृश्यते। यद्यपि जगन्नाथेन तस्य प्राणभरणे पेरमभट्टः इति नाम्नैव स्वयमेव सम्वोधितम्[1]। पुनः पण्डितराजः स्वयमेव तस्य गौरवात्मकस्य काव्य-शास्त्रीयग्रन्थस्य मङ्गलाचरणे पितुर्नाम पेरुभट्टः इति वन्दितः -

पाषाणदपि पीयूषं स्यन्दते यस्य लीलया।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्॥[2]

अन्ध्रप्रदेशस्थिते गोदावरीजनपदान्तर्गते 'मुगुन्डा'[3] इत्याख्ये ग्रामे पण्डितराजस्य जन्म अभवत्। प्रसिद्धानां भारतीयापरकवीनामिव काव्यशास्त्रकाराणामिव वा जगन्नाथस्य समग्र-जीवनवृत्तान्तमपि तमसाच्छन्नं भवति। यद्यपि स्पष्टरूपेण न तादृशं समुचितं तथ्यं प्राप्यते, तथापि तस्य जीवनसम्वन्धानि वहुविधानि तात्पर्यपूर्णानि तथ्यानि संस्कृतसाहित्यपरिसरे इतस्ततः विकीर्णानि प्राप्यन्ते। ऐतिहासिकदृष्ट्या उपलभ्यमानानां साहित्यानां परिशीलनेन तथा अपरतथ्यसहायकत्वेन पण्डितराजसम्बन्धविषयं निर्धारितं पण्डितैः।

**लवङ्गीसम्बन्धा किंवदन्ती**

पण्डितराजजगन्नाथः संस्कृतसाहित्याकाशे यथा सर्वेषां परमादरणीयः श्रद्धेयश्च भवति तथैव तस्य समग्रजीवनं परिपूर्णं भवति वहुविधकिंवदन्तीभिः। कतिपयक्षेत्रेषु तु तस्य जीवनाश्रिता जनश्रुतिरेव पाठकानां समीपे वहुचर्चितविषयरूपेणापि समादृताः। जगन्नाथस्य जीवनाश्रित्य यासां किंवदन्तीनां चर्चापर्यालोचना दृश्यते संस्कृतसाहित्यजगति नापरस्य कस्यचिदपि कविलेखकस्य वा चर्चा परिलक्ष्यते। एतादृशानां बहुविधानां किंवदन्तीनां प्रकृतिः प्रतिपाद्यविषयदृष्ट्या वा पण्डितैः किंवदन्तयः त्रिधा विभज्यते[4] –

---

[1] इति श्रीमहामहोपाध्याय परवाक्यप्रमाणपारीण तैलङ्गकुलावत्स श्रीपेरमभट्टसुरेस्तनयेन विनिर्मितं जगदाभरणाख्यं जगत्सिंहवर्मनम्। प्राणभरणम्, अन्तिमोक्तिः तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालितः श्रीमत्पेरमभट्टः सूनुरनिशं विद्वल्ललादन्तपः। प्राणभरणम्, ५३

[2] रसगङ्गाधरः, १/३

[3] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-२

[4] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-१३

ISSN : 2277-2359

क. यवनकन्यालवङ्ग्या सह जगन्नाथस्य प्रणयसम्बन्धितकिंवदन्तयः।

ख. विविधनृपसम्बद्धाः किंवदन्तयः।

ग. अप्पयदीक्षित-भट्टोजिदीक्षितैः सह पण्डितराजस्य समकालीनत्वमाश्रित्य किंवदन्तयरपि वहुप्रसिद्धाः सन्ति।

उक्तानां किंवदन्तीनां लवङ्गीविषयः सर्वजनप्रसिद्धः सर्वाधिकचर्चितश्च। यवनसुन्दरी-लवङ्ग्या सह पण्डितराजजगन्नाथस्य प्रणयविषयमाश्रित्य तथा जगन्नाथस्य जीवने यवन-रमणीसंसर्गविषये पण्डितानां मध्ये विविधमतभेदः परिलक्ष्यते। केचन तु लवङ्गीविषयं सत्यरूपेण केचन तु मिथ्यारूपेण विषयमिदं विवेचितम्। किंवदन्त्याः सत्यासत्यता-विवेचनायाः प्रागेव लवङ्गीविषयं परिस्फुटनीयमस्माकम्। केषाञ्चन मते लवङ्गी आसीत् अकबरस्य कन्या[1]। एकस्मिन् दिवसे जगन्नाथेन सह वार्तालापसमये तत्र लवङ्गी नाम यवनकन्यायाः मस्तके जलपूर्णघटनिधाय प्रवेशः अभवत्। तदा अकबरेणादिष्टः जगन्नाथः मस्तकोपरिघटसहितायाः लवङ्ग्याः रूपवर्णनप्रसङ्गेनोक्तम् -

इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारुचैलं दधाना।
समस्तस्य लोकस्य चेतः प्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति॥[2]

जगन्नाथस्य एतादृशवर्णनं श्रुत्वा मुग्धस्सन् अक्बरः जगन्नाथं यथामति ईप्सितविषयं याचितु-मवदत्। पण्डितराजस्तु यवनकन्यां प्रथमदर्शनैव तस्याः रूपलावण्येन अतिशयमुग्धः अभवत्। यवनरमण्याः रूपमुग्धः जगन्नाथः तदावसरे स्वीयाभिलाषः पूरणार्थमुक्तम् –

न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदापि।
इयं सुस्तनी हस्तविन्यस्तकुम्भा लवङ्गी कुरङ्गी दृगङ्गीकरोतु॥[3]

अनन्तरं वचनवद्धेन अकबरेण जगन्नाथस्य एतादृशा अयाचितयाचना स्वीकृता। परन्तु केषाञ्चित् पण्डितानां मतानुसारेण पण्डितराजः शाहजहानृपस्य आश्रीतासीत् न तु

[1] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-१४-१५, भामिनीविलासः, हरदत्तशर्मा (भूमिकांश) पृ- ४-५

[2] पण्डितराजकाव्यसंग्रहः, लवङ्गीप्रशंसायाम्, पद्य-५८४

[3] पण्डितराजकाव्यसंग्रहः, लवङ्गीप्रशंसायाम्, पद्य-५८२

अकबरस्य[1]। पण्डितराजेन शाहजहानृपसमीपतः लवङ्गीं याचीतवानिति। विवाहानन्तरं तत्कालीनसमाजः जगन्नाथस्य अनेन असवर्णसम्बन्धेन असन्तुष्टः जातः। यवनरमणी-संसर्गदोषात् जगन्नाथः समाजवहिष्कृतः अभवत्। अनन्तरं सः वाराणसीं गत्वा गङ्गातटे आश्रयं लव्धवान्। श्रुयते तदा परमदुःखवशादेव गङ्गालहरीद्वारा गङ्गामातुः स्तुतिः विहिता जगन्नाथेन। अनन्तरं गङ्गा तस्यावेगाप्लुतया रचनया प्रभावितः सपत्नीजगन्नाथं प्लावितवति इति, अथवा विवाहानन्तरं पत्नीवियोगेन व्यथितः सन् वाराणसीं गत्वा गङ्गास्तुतिः कृता गङ्गा च तं स्वक्रोडे परमस्नेहेन गृहीतवतीति[2]। अतः अनुमीयते उक्तकिंवदन्त्यानुसारं यत् गङ्गास्तुतिपरका गङ्गालहरी एव जगन्नाथस्यान्तिम रचना इति।

**लवङ्गीवृत्तान्तस्य समीक्षणम्**

पण्डितराजस्य जीवने लवङ्गी नाम यवनरमणीमाश्रित्य उक्तकिंवदन्ती यद्यपि वहुरोचका प्रतीयते विपक्षीयानां मध्ये तथापि तेषां यथार्थतायाः विषये पण्डितानामैक्यमतं न तादृशं परिलक्ष्यते। ऐतिहासिकदृष्ट्या जगन्नाथसम्पर्कितथ्यानाञ्च परिशीलनेन अस्याः किंवदन्त्याः ग्रहणयोग्यता तथा सार्विकसत्यता तु न विश्वसनीया इति। मुलतः वहुप्रतिभा-धरस्य पण्डितराजस्य चरित्रोपरि विरोधीनां विरोधीतैव यवनरमणीसंसर्गदोषरूपपङ्कस्य प्रक्षिप्तत्वेन जनसमाजे प्रचलितासीत्। समग्रतथ्यानां विश्लेषनेन प्रस्तुतानां केचित विन्दुभिः पण्डितराजस्य जीवनसम्बन्धं लवङ्गीवृत्तान्तं मिथ्यात्वं प्रतीयते सर्वैव केषाञ्चन जनानां मतानुसारेण जगन्नाथस्य सम्बन्धम् अकबरेण सह स्थापयित्वा लवङ्गी नाम यवनकन्याम् अकबरस्य कन्यारूपेण परिगणितम्। परन्तु विषयमिदं न तु समर्थनीयम्। ऐतिहासिकदृष्ट्या अकबरसम्बन्धीयग्रन्थेषु कुत्रापि लवङ्ग्याः नामोल्लेखः न प्राप्तः। अपिच अकबरस्य पुत्ररूपेण जहांगीरः एव सर्वजनप्रसिद्धः भवति। यदि लवङ्गी अकबरस्य पुत्री स्यात्तर्हि जहांगीरेण सह लवङ्गी भगिणीसम्बन्धावद्धा भवति। परन्तु कुत्रापि लवङ्ग्या सह तस्य भ्रातृभगिनीसम्बन्धस्य

---

[1] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-१६

[2] जगन्नाथपण्डितः,भि.ए.रामास्वमी,पृ-१९-२०, भामिनीविलासः, हरदत्तशर्मा, (भूमिकांश) पृ, ४-५

 ISSN : 2277-2359

प्रमाणं न लब्धम्[1]। अतः जगन्नाथेन सह लवङ्ग्याः अकबरस्य वा सम्बन्धविषयः नूनं मित्या प्रवादोऽयं प्रतिभाति।

यदि लवङ्गी अकबरस्यैव पुत्रीति स्वीक्रीयते तथापि विषयमिदं न वास्तवपरकम् असंलग्नत्वेन वा प्रतीयते यत् अकबरसदृशेन नृपेण कथमगणितानां परिचारिकानां विहाय स्वपुत्रीं जलमानायादिष्टः इति। यदि वा सा आदिष्टा तथापि अकबरेण स्वकन्यायाः मस्तके जलपूर्णघटसहितायाः रूपलावण्यवर्णने विधर्मी अज्ञातपुरुषः नियुक्तः इति विषयस्तु अलीक-असम्भवत्वेन प्रतिभाति। अतः अकबरेण सह लवङ्गीसम्बन्धस्तथा लवङ्ग्या सह जगन्नाथस्य परिणयविषयोऽपि सर्वथा मिथ्यैवेति अनुमीयते।

केचन विद्वांसः पुनः लवङ्गीं शाहजाहानृपस्य कन्यारूपेण उपस्थापयन्ति तथा प्रचलितायाः कथायाः सम्बन्धं शाहजाहानृपेण सह स्थापितुमिच्छति। ऐतिहासिकग्रन्थानां परिशीलनेन ड.भि.ए. रामास्वामी-महोदयस्य मते शाहजहानृपेण तस्मिन् समये भिन्नधर्मा-वलम्बीभिर्सह यवनरमणीनां प्रणयविषयः निषिद्धः कृतः[2]। अतएव शाहजहानेन स्वपुत्री पण्डितराजाय सम्प्रदत्ता इति विषयमपि असम्भवं प्रतिभाति, लवङ्गीप्रणयप्रसङ्गोऽपि सर्वैव मिथ्येति अनुमीयते इति।

अनन्तरं यवनरमणीसंसर्गदोषात् पण्डितराजः समाजवहिष्कृतः सन् वाराणसीम् आगत्य गङ्गालहरी नाम गङ्गास्तुतिद्वारा गङ्गायां निमज्जीतवानिति विषयं यदि सत्यं स्यात्तर्हि गङ्गास्तुतिपरका गङ्गालहरी एव पण्डितराजस्यान्तिमरचना भवितुमर्हति। परन्तु एतदपि मिथ्यात्वेन परिगणितम्। यतः पण्डितराजेन स्वयमेव तस्य प्रमुखप्रसिद्धग्रन्थे रसगङ्गाधरे तस्य पञ्चलहरीनामोल्लेखः कृतः। अतः दृश्यते – **'मन्निर्मिता पञ्चलहर्यः भावस्य'**[3] इति। अपि च गङ्गालहर्याः प्रथम-पञ्चदश-एकादशश्लोकास्तु रसगङ्गाधरे जगन्नाथेन उदाहरण-स्वरूपेण उल्लिख्यते[4]। यदि गङ्गास्तुतेरनन्तरं सपत्नीजगन्नाथेन गङ्गासलिले निमज्जीतमिति

---

[1] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-१७- १८

[2] जगन्नाथ पण्डित,वि.ए.रामास्वामी,पृ-२१

[3] पण्डितराजकाव्यसंग्रहः (भूमिकांशः),पृ-६

[4] तत्रैव

तर्हि कथमेतत् सम्भवपरं भवेदिति। अतः लवङ्ग्या सह जीवनविसर्जनविषयमपि न तु प्रमाणितम्, सर्वैव विपक्षीयानां कल्पना मित्याप्रलापेव प्रतिभाति।

लवङ्गीसम्बन्धानां पद्यानामाधारिकृत्य ये समालोचकाः पण्डितराजस्य सम्बन्धं लवङ्ग्या सह कर्तुमिच्छन्ति तेषां युक्तिरेषापि तु न ग्रहणीया। ड. रामास्वामिनः मतानुसारेण लवङ्गी यदि पण्डितराजस्य पत्न्यासीत्, तया सह यदि जगन्नाथस्य किञ्चिदपि प्रणयविषयः आसीत्तर्हि कथं तामधिकृत्य पद्यानि सर्वानि तस्य प्रसिद्धग्रन्थेषु नोल्लिखितानि। अपि च भामिनीविलासस्य सम्भोगशृङ्गारे, शान्तविलासे पत्नीवियोगजनिते शोकविलापे वा लवङ्गी-प्रसङ्गः कथं न स्थापनीयः इति[1]। यद्यपि पण्डितराजेन तदीयकाव्यस्य उदाहरणत्वेन स्वरचितानि पद्यान्येव संगृहीतानि। एतद्विषये पण्डितराजेन स्वयमेवोक्तम् –

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तुरिकाजननशक्तिभृता मृगेण॥[2]

तथापि लवङ्गीसम्बन्धानां लिखितपद्यानां कुत्रापि न स्थानं परिलक्ष्यते। पुनः पण्डितराजेन स्वयमेव लिखितम् –

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया।
मदीयपद्यरत्नानाम्मञ्जुषैषा मया कृता॥[3]

अतः लवङ्गीसम्बन्धानां श्लोकानां पण्डितराजेन तस्य भामिनीविलासे तेषामुपनिवन्धनं कथं न कृतमिति। अनेनानुमीयते यत् लवङ्गीसम्बन्धानि सर्वानि पद्यानि पृथकतया अपरैः संयोजितानीति। वस्तुतः किंवदन्तयः काल्पनिकविषयात्मकाः भवन्ति। लवङ्गीसम्वन्धा जनश्रुतिरपि प्रलापः एव। एतस्याः किंवदन्त्याः समर्थनं गतानुगतिकचिन्ताधारायाः प्रकाश

[1] जगन्नाथपण्डितः,भि.ए.रामास्वामी,पृ-२०-२१

[2] रसगङ्गाधरः, १/६

[3] भामिनीविलासः(शान्तविलासः)- ४६

 ISSN : 2277-2359

एव। रामास्वामिनः मतानुसारेण लवङ्गीप्रणयप्रसङ्गं मिथ्यैव प्रतीयते यतः कुत्रापि जगन्नाथेन तस्य समग्ररचनासु यवनरमणी तथा यवनरमण्याः सौन्दर्यविषयं नोपस्थापितम्[1]।

**उपसंहारः-**

अनेन प्रकारेण उक्तानां तथ्यसूत्राधारेण जगन्नाथसम्बन्धं लवङ्गीवृत्तान्तं तु विरोधीनां मिथ्याप्रचारस्तथा पण्डितराजस्य चरित्रस्योपरि कलङ्कप्रदानेच्छा प्रतीयते। किंवदन्ती तु कल्पनाप्रसूतानाम् अलीकविषयानां सारमेव, परन्तु एतदपि सत्यं यत् किंवदन्त्याः बास्तविकता पूर्णतया यद्यपि न सम्भवति तथापि सम्पूर्णरूपेणापि कल्पना-प्रसूता वास्तववर्जिता न भवति। किंवदन्त्याः सत्यविन्दुः अवश्यमेवास्ति यद्यपि तत्र सत्यांशानि नाममात्रानि एव वा। लवङ्गीवृत्तान्तं सत्यत्वेन ग्रहणे विन्दवः यथा – लवङ्गी-विषयस्य प्राचीनता अस्याः किंवदन्त्याः यथार्थतायाः प्रमाणमेव[2]। अस्याः प्राचीनतायाः कारणादेव ड. आर्येन्द्रशर्मना, ड. मञ्जुलताशर्मनापि किंवदन्तीनां सत्यताविषयं सम्पूर्ण-रूपेण नास्वीकृतम् इति।

जगन्नाथस्य प्राप्तग्रन्थेषु उक्तलवङ्गीप्रशस्तीनामुल्लेखः यद्यपि नोपलभ्यते तथापि एतत्तु न प्रमाणितं यत् तस्य प्राप्तग्रन्थानाम् अप्रकाशितांशे तेषामुल्लेखः न भवेदिति[3]। सर्वेषामेव कवीनां रचनायां तस्य जीवनाधारितस्य सकलविषयस्योल्लेखः न तु अत्याव-श्यकरूपेण ग्रन्थमध्येषु प्रदीयते। अधिकस्तु पण्डितराजस्य लिखनकौशलमपि लवङ्गी-सम्बन्धानां पद्यानामस्तित्वविषये उत्तमप्रमाणं भवितुमर्हति। शैलीगतदृष्ट्या दृश्यते यत्, पण्डितराजस्य रचना तु मुलतः माधुर्य-प्रसाद-गुणसम्पन्ना, गीतात्मका, तथा अनुप्रासादि-शव्दालङ्कारविभूषिता भवति। लवङ्गीविषयकेषु पद्येष्वपि उक्तशैली नितरामनुभूयते। लवङ्गीविषये पद्यानि यथा –

यवनी नवनीतकोमलाङ्गी शयनीयं यदि नीयते कदाचिद्।
अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः॥
यवनी रमणी विपदः शमनी कमनीयतमा नवनीतसमा।

[1] जगन्नाथपण्डितः,भि.ए.रामास्वामी,पृ-२१

[2] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-२४

[3] पण्डितराजजगन्नाथ-शेमुषीसमुन्मीलन,मनुलता शर्मा, पृ-२२

उहिऊहिवचोऽमृतपूर्णमुखी स सुखी जगतीह यदङ्कगता॥[1]

उक्तपद्येषु 'गजालिं-वाजिराजिं', 'यवनी-रमणी-शमनी', 'लवङ्गी-कुरङ्गी-दृगङ्गी', 'कमनीयता-नवनीतसमा', 'पूर्णमुखी-सुखी', 'भासमाना-रम्भासमाना', प्रभृतयः स्थानेषु अनुप्रासिकता नितरां दृश्यते। अतः एतस्याः भाषारीत्यानुसारेण लवङ्गीविषयकपद्याः पण्डितराजस्यैव लेखनीप्रसूताः इति अनुमीयते। अनेन लवङ्गीसम्बन्धायाः किंवदन्त्याः सत्यताविषयोऽपि प्रवलः भवति। उक्तालोचनया पर्यालोचनया वा वक्तुं शक्यते यज्जगन्नाथस्य जीवने लवङ्गी नाम यवनतमण्याः प्रभावः पूर्णतया न परिलक्ष्यितं सर्वमेव न सत्यमिति। परन्तु मुघल-समये पण्डितराजस्य परिचयः काचित् यवनकन्यया सहाभवतिति तु अनस्वीकार्यम्। आर्येन्द्रशर्मनापि तस्य पण्डितराजकाव्यसंग्रहे विषयमिदं समर्थित्वा उक्तम् – 'Presuming that the well-known Lavangi verses are genuine, the story that Panditaraja fell in love with a Muslim girl in the Mughal Court may also be true'.[2] अतः किंवदन्त्यानुसारं लवङ्गीसम्बन्धं सम्पूर्णविषयं तु मिथ्याप्रलापत्वेन असत्यरूपेण तु यद्यपि परिगणितं तथापि पण्डितराजस्य जीवने काचित् यवनरमणी अवश्यमेवासीत् अपि च तस्य फलस्वरुपेण समाजस्थितानां ब्राह्मणानां रोषानले अपि सः पतितः इति विषयोऽयं नोपेक्षणीयेति।

**सहायकग्रन्थपञ्जी** -

1. शर्मा आर्येन्द्रः, पण्डितराजकाव्यसंग्रहः, उसमानियाविश्वविद्यालयः, हैदरावादः, प्रथमसंस्करणम्, १९५८

2. पण्डितराजजगन्नाथः, लहरीपञ्चकम् (चन्द्रप्रभाख्याया संस्कृतव्याख्यया समन्वितम्), वाचस्पतिभुवनेश्वरकरशर्मा, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, प्रथमसंस्करणम्, २०१०

3. पण्डितराजजगन्नाथः, रसगङ्गाधरः(मर्मप्रकाशटीकासहितः), सम्पा. सन्ध्या भादुडी, संस्कृत-पुस्तक-भाण्डारः, कलिकाता।

4. शास्त्री, भि.ए.रामास्वामी, जगन्नाथपण्डितः, जोसेफ्-इन्डास्ट्रियाल-स्कुल-प्रेसः, आन्नामालाइ नगरम्, १९४२

[1] पण्डितराजकाव्यसंग्रहः(लवङ्गीप्रशंसायाम्) पृ-१९०. ५८५-५८६

[2] पण्डितराजकाव्यसंग्रहः (भूमिकांशः) पृ-१०

5. शर्मा, मनुलता, पण्डितराजजगन्नाथ शेमुषीसमुन्मीलन, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी, प्रथमसंस्करणम्, २००३

6. शर्मा, हरदत्तः, भामिनीविलासः, ओरियेन्टाल बुक् एजेन्सि, पुना, १९३५

7. अग्रवालः, हंसराजः, संस्कृतसाहित्येतिहासः, चौखाम्वा-सुरभारती-प्रकाशन्, वाराणसी, २००२

8. दाहालः, लोकमणिः, संस्कृतसाहित्येतिहासः, चौखाम्वा-कृष्णदास-अकादेमी, वाराणसी, चतुर्थसंस्करणम्, २०१६

# भगवतः श्रीकृष्णस्य अवताररहस्यविचारः

**डा.वि.बालाजी**

सहायकाचार्यः, संस्कृतविभागः

द्वारकादासगोवर्धनदासवैष्णवविद्यालयः, आरुम्बकम्

**कुञ्चिकापदानि**

श्रीमन्नारायणः, अवताररहस्यम्, अर्जुनः, साधूनाम्, दुष्कृताम्, कर्म।

**शोधसारः**

वेदस्य सर्वस्यार्थं विशदं विस्तारयितुमेव गीताचार्याः जीवगणाग्रेसराय पार्थाय गीतां समुपदिदेश। तत्र कर्मयोगाख्ये प्रथमषट्कस्थ चतुर्थाध्यायस्य प्रारम्भे भगवता कौन्तेयमुद्दिश्य कर्मयोगवैशिष्ट्यं प्रतिपाद्यते - इमं विवस्वते योगं....... इत्यादिभिः पद्य-विशेषैः। तदा अर्जुनेन कथं वा द्वापरयुगजातेन त्वया विवस्वतादीनां कृतयुगजन्मप्राप्त-वताम् उद्देशं कर्तुं शक्यत इति पृष्टे सति प्रश्नस्योत्तररूपेण स्वावताररहस्यं, बहूनि मे व्यतीतानि जन्मानि ...... इत्यादिना विस्तारयितुं समारभ्यते, तदस्मिन् शोधपत्रे यथामति प्रमाणपुरस्सरं प्रपञ्चितं वर्तते।

**उपोद्घातः**

वेदस्य सर्वस्यार्थं विशदं प्रकाशयितुमेव भगवान् श्रियःपतिः श्रीमन्नारायणः गीतामगासीदिति सुविदितमेतत्। वेदः कर्मब्रह्मकाण्डात्मना द्वेधा विभज्यते। तदर्थं सर्वस्वम् अत्र स्थितमिति कृत्वैवेत्थं कथ्यते –

गीता सुगीता कर्तव्या किमन्यैः शास्त्रसञ्चयैः।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिस्सृता॥[1]

इति। तत्रेयं भगवद्गीता सुयोधनात्प्रवृत्ते महति समरे गुरुजनादरेण कुलक्षयभयेन बन्धुस्नेहेन च युद्धश्रद्धाविकलं मध्यमपाण्डवं प्रकृतौ पर्यवस्थापयितुं भगवान् वासुदेवः स्वधर्मानुष्ठानम् अशेषाणामावश्यकमित्युपदिदेश, इदं प्रकरणमवलम्ब्य प्रवृत्तेयमष्टादशाध्यायीति।

---

[1]गीताभाष्यव्याख्या

षट्कत्रयात्मिकायामस्यांपूर्वषट्केन परमात्मसाक्षात्कारनिश्श्रेणिभूतप्रत्यगात्मयाथात्म्य ज्ञानसहकारिभूतौ सपरिकरौ कर्मयोगज्ञानयोगावुपदिष्टौ। तच्चोक्तम् –

ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते॥[1]

एवं द्वितीयषट्केन –

मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये।
ज्ञानकर्माभिनिर्वर्त्त्यो भक्तियोगः प्रकीर्तितः॥[2]

इति भगवत्तत्त्वज्ञानसंपत्तिहेतुः ज्ञानकर्मपरिकर्मितः भक्तियोग उक्तः। प्रथमषट्कशेषभूतेन तृतीयषट्केन –

प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम्।
कर्मधीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः॥[3]

इति मूलप्रकृतेः महदादीनां तत्कार्याणां भोक्तुः पुरुषस्य कर्मज्ञानभक्तियोगानां च विवेचनम् इति संगत्या निदर्शितोऽयं विभाग इति भगवद्यामुनपरमाचार्यपादाः गीतार्थं समगृह्णन्। एवं

गीता गङ्गा च गायत्री गोविन्देति हृदि स्थिते।
चतुर्गकारसंयुक्तिः पुनर्जन्म न विद्यते॥[4]

इति मोक्षप्राप्तिप्रतिपादकपरस्यास्य ग्रन्थस्य द्वैताद्वैतविशिष्टाद्वैतसिद्धान्तप्रकटनपराणि सुप्रसिद्धानि व्याख्यानानि संविलसन्ति। तेषु भगवद्रामानुजाराचार्यैः समनुगृहीतभाष्यानुगुणं प्रथमषट्कस्थचतुर्थाध्यायस्य प्रारम्भे प्रसङ्गात् प्रतिपादितभगवदवताररहस्यम् अधिकृत्य किञ्चिदत्र विस्तीर्यते।

**अवताररहस्यविचारः**

पूर्वस्मिन् कर्मयोगाख्ये तृतीयेऽध्याये कर्मयोगस्य वैशिष्ट्यम्, तस्येतिकर्तव्यताकं,

---

[1]**गीतार्थसंग्रहः** 2

[2]**गीतार्थसंग्रहः** 3

[3]**गीतार्थसंग्रहः** 4

[4]**गीताभाष्यव्याख्या**

तदकरणे ज्ञानयोगानधिकारत्वञ्च सुप्रतिपादितम्। इह चतुर्थेऽध्याये अधिकर्तव्यतयोक्तस्य कर्मयोगस्य प्रामाणिकत्वं, ज्ञानमिश्रत्वम्, तत्स्वरूपम्, तद्वैविध्यम्, ज्ञानांशस्य प्राधान्यम्, प्रासङ्गिको भगवदवतार इति षडर्थाः सम्प्रोच्यन्ते। ननु –

प्रसङ्गात् स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च।

भेदाः ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते॥ [1]

इति यामुनाचार्यैः स्वीये गीतार्थसंग्रहाख्ये ग्रन्थे चत्वरोऽर्थाः सङ्गृहीताः सन्ति, तत्कथमत्र षडर्थानुकीर्तनमिति चेत्, तदुच्यते –**प्रसङ्गात् स्वस्वभावोक्तिः** इत्यत्र प्रसङ्ग इत्यस्य प्रामाणिकत्वप्रसङ्गार्थ आक्षिप्यते, एवम् **अस्य च भेदा** इत्यत्र स्वरूपमन्तरेण तद्भेदस्य दुर्ज्ञानत्वात् स्वरूपमपि विवक्षितम्, एवं श्लोकस्थ चकारेण तत्समुच्चयार्थेनापि षडर्था एव विवक्षिता इति। एवञ्च स्वस्वभावोक्ति इत्यस्य **'स्वस्य अकर्मवश्यावतारत्वादिस्वभावोक्तिः'** इत्यर्थः। एवं कर्मणोऽकर्मता इत्यस्य कर्मयोगस्यान्तर्गतज्ञानतया ज्ञानयोगाकारता समाक्षिप्ता वर्तते। एवं ज्ञानस्य माहात्म्यमिति पदेन कर्मयोगान्तर्गतज्ञानांशस्य प्राधान्यमिति सर्वमत्र चतुर्थेऽध्याये आचार्यैः स्पष्टीक्रियते।

भगवान् वासुदेवः स्वशिष्यायार्जुनाय इतोऽपि कर्मयोगस्य वैशिष्ट्यावगमनार्थं स्वयमित्थं समुपदिशति –

इमं विवस्वते योगं प्रोतनहमव्ययम्।

विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।

स कालेनेह महता योगो नष्टः परन्तप॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।

भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥ [2]

---

[1]**गीतार्थसंग्रहः** 8

[2]**श्रीमद्भगवद्गीता** 4 1-3

भगवताअर्जुनाययः कर्मयोगः समुदितो वर्तते तन्न युद्धप्रोत्साहनाय, अपि तु मन्वन्तरादावेव निखिलजगदुद्धरणाय, एवं समस्ताधिकारिवर्गापवर्गदानाय च विवस्वते सन्निगदतोऽवर्तत। ततः विवस्वान् मनवे, मनुरिक्ष्वाकवेति संप्रदायपरम्परयागतमिदं मोक्षसाधनभूतं कर्मयोगं राजर्षयः अश्वपति-जनकाम्बरीषप्रभृतयोऽप्यविदुः।तथाभूतस्य योगस्यपूर्णे जगति कृतत्रेतादिषु युगेषु कालक्रमेण बुद्धिशक्त्यनुष्ठानादयोऽपचीयमाना दृष्टाः, श्रुताश्च, तत्संसूचनार्थं **नष्टः** इति पदप्रयोगः कृतः श्लोके, नष्ट इत्यस्य विनष्ट इति नार्थः, यतो हि - व्यासभीष्माक्रूरादे इदानीमपि विद्यमानत्वात्, अतः नष्ट इत्यस्य अत्यन्तविच्छेदो नाभिमतो भाष्यकाराणाम्। तदर्थमेव भाष्ये **विनष्टप्राय** इति पदप्रयोगः कृतः। तथाभूतः पुरातनात्मकः कर्मयोगः अद्य मया अतिमात्रभक्तियुताय ते, एवम् अवतारदृष्टसौलभ्य-विशेषेण प्रणयविस्रम्भवते सखाय ते च सम्प्रोक्तः, एवमयञ्च योगः मदन्येन केनापि ज्ञातुं वक्तुञ्चाशक्यत्वात्, वेदान्तोदितोत्तमरहस्यत्वाच्च प्रपन्नाय मद्भक्ताय ते समुपदिशामि, इति स भगवान् वासुदेवः प्रोवाच। साम्प्रतमर्जुनः प्रसङ्गात्तस्यावतारयाथात्म्यं ज्ञातुमित्थमुवाच –

अवरं भवतो जन्म परं जन्म विवस्वतः।
कथमेतद्विजानीयां किमादौ प्रोक्तवानिति॥[1]

हे कृष्ण **भवतो जन्म अवरं** अर्थात् कालसङ्ख्यया अस्मज्जन्मसमकालत्वात् भवतः जननमवरं, विवस्वतो जन्म तु कालसङ्ख्याया**परं** अर्थात् उत्कृष्टं वर्तते, तत्कथं त्वया आदावेवास्य कर्मयोगस्योपदेशः कृतः इत्यहं जानीयामिति पृच्छत्यर्जुनः। तत्र भाष्यकारा-णामाशङ्का यत् – एवं वक्तुं न युज्यते अर्जुनेन, तेन इत्थं चिन्त्यते – साम्प्रतं यस्याम् अवस्थायां भगवानुपदिशति तस्यामेवावस्थायां विवस्वानुद्दिश्यापि समुपदिष्टवानिति विचिन्त्येत्थमपृच्छदेषो पार्थः इति न। एवं तस्य समकाले भगवतो जननमिति विचिन्त्य-मानेऽपि, भगवान् पूर्वस्मिन् जन्मन्यपि समुपदेशयामास, तस्य स्मरणमिदानीं कृत्वा तेनेत्थं सङ्गदितं **'विवस्वते उपदिष्टं मया'** इति। कथं वा भगवता पूर्वजन्मोपदिष्टस्य विषयस्य स्मरणमिदानीं क्रियत इति अर्जुनः चिन्त्यते, इत्यपि वक्तुं न शक्यते, यतो हि – सर्व-

[1]श्रीमद्भगवद्गीता 4.4

साधारणतया जन्मप्राप्तवतेषुकर्मवश्येषु जीवेषु केचन पूर्वजन्मस्मरणाः सन्तीत्यस्ति लोके, अयमेव विषयः तात्पर्यचन्द्रिकायां स्वामिपादैः इत्थमुक्तं –**जातिं स्मरति पौर्विकीं**[1]**अनुभवेन संस्कारे प्रागेव निष्पन्ने तस्य च अदृष्टविशेषवशादुद्बोधे जन्मान्तरानुभूतस्मृतौ न काचिदयुक्तिः, यथा प्रथमस्तन्यपाने स्तन्यस्य पिपासाशान्तिहेतुत्वस्मृताविति भावः। महतामन्येषां स्मृतिः, ईश्वरस्य तु प्राचीनवृत्तान्तगोचरः साक्षात्कारः स्मृतिरित्युपचर्यते।** एवं भगवान् श्रीकृष्णः सर्वेश्वरः इति अज्ञात्वैवेत्थमुक्तमर्जुनेनेत्यपि वक्तुं न शक्यते, यतो हि – अस्यामेव गीतायामुत्तरत्र पार्थेनेत्थं प्रोच्यते –

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥[2]
आहुस्त्वामृषयस्सर्वे देवर्षिनारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥[3]

भवानेव परं ब्रह्म, निरतिशयज्योतिः, सर्वान् पवित्रीकरोति, परिशुद्ध्यात्मकः, सर्वव्यापीति सर्वेऽपि तपस्विनः बहुधा बहुत्र बहुविधप्रकारेण च प्रोचुः। एवं युधिष्ठिरसमाचरितराजसूययागेषु भीष्मादिभ्यश्चासकृच्छ्रुतम्–**कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्॥**[4]इत्यादिना सर्वमपि जगत्तस्य शेषभूतमिति च संश्रुतम्। तथा भगवतो स्वरूपस्वभावमाहात्म्यज्ञानवतार्जुनेनेत्थं पृच्छ्यते कथं भवता मन्वन्तरादावेव विवस्वते समुपदिष्टमिति भाष्यकाराणां आशङ्का, तस्य समाधानमपि स्वयमेवोच्यते –

असावर्जुनः सम्यक् जानात्येवायं वासुदेवः श्रीकृष्ण एव सर्वान्तरात्मभूतः सर्वेश्वरः सर्वशेषीति, तथापि जानतोऽप्यजानत इव सङ्गदनस्यान्यार्थोऽस्ति, तत्तु – हे कृष्ण! भवतो स्वरूपकल्याणगुणादीनामालोचनेन इत्थं सुस्पष्टं ज्ञायतेऽत्र एतादृशं भवज्जन्म व्यर्थमिति,

---

[1]मनु.स्मृतिः 4.148

[2]भगवद्गीता 10.12

[3]भगवद्गीता 10.13

[4]भा.स.38.26

यतो हि – भवान् निखिलहेयप्रत्यनीकः स्वाश्रितानां पापापनोदनसामर्थ्यशाली च सततं विद्योतते, किमर्थमेवम्भूतकर्मकृतशरीरमवलम्ब्य जननम्? एवम्भूतेन जन्मना किम्प्रयोजनम्, किं वा सुखञ्च? यद्यस्ति चेदेकः नियामकः ते, तर्हि तेषां नियमेन अस्मादृशवज्जन्म सङ्गच्छते, तथा कोऽपि नास्तीति कारणत् सर्वेश्वरस्य तव किमर्थं जन्म? एतत्कार्यमेतदकार्यमिति अज्ञातवतो शिशुरिवास्मिन् संसारेऽवतरितं मयेत्यपि वक्तुं न शक्यते, भवति सर्वज्ञत्वगुणभूयिष्ठश्रवणात्। लोकरक्षार्थं जन्मेत्युच्यते चेत्, तन्न लोकरक्षणं तु परे लोके स्थित्वैव स्वसङ्कल्पमात्रेणैव कर्तुं शक्यते, त्वयि सत्यसङ्कल्पत्व-सर्वशक्तिमत्वकथनात्। यत्किमपि प्राप्तव्यमस्ति लोके तदर्थं जन्म इत्यपि वक्तुं न शक्यते, उपनिषत्सु त्वयि अवाप्तसमस्तकामत्वाख्यगुणकथनात्। अतः किमिन्द्रजालादिवत् भवज्जन्म मिथ्या, उत सत्यम्? सत्यत्वे कथं जन्मप्रकारः? किमात्मकोऽयं देहः? कश्च जन्म हेतुः? कदा च जन्म? किमर्थञ्च जन्म? अयमेव विषयः पद्यरूपेण संगृहीतो वर्तते –

अघप्रत्यनीको महानन्दतृप्तो निरीशोऽखिलज्ञः सुसंकल्पवित्तः।
कथं कृष्ण जन्मान्यतादृंशि लोके स्वयं हन्त गृह्णास्यहं तद्बुभुत्से॥[1]
सत्यं किमैश्वरगुणं किमभौतिकं किं हेतुर्जनौ क इह कालफले च के ते।
इत्यर्जुनः खलु बुभुत्सुरपृच्छदेतं जन्मान्तरस्मरणशक्तिविदप्यमुष्य॥[2]

इति पृष्टस्य प्रश्नसमूहस्य प्रतिवचनानि क्रमेण भगवता संप्रोच्यते –

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप॥[3]

पद्येऽस्मिन् स्वजननसत्यत्वं स्पष्टीक्रियते भगवता **बहूनि** इति पदप्रयोगेण। हे अर्जुन ! मया त्वया च नैकानेकानि जन्मानि व्यतीतानि, परन्तु तानि सर्वाण्यपि ज्ञातुं, स्मर्तुञ्च शक्तिरस्ति मन्निकटे, त्वयि तु न वर्तत इत्युभयोः व्यत्यासः। एतादृशेन **बहूनि जन्मानि** इति प्रतिवचनपदप्रयोगेन, इदानींतनत्वं तदानींतनाय विवस्वते कथमुपदिष्टवानिति

[1]गीताभाष्यव्याख्या

[2]गीताभाष्यव्याख्या

[3]श्रीमद्भगवद्गीता 4.10

पृष्टस्य प्रश्नस्य, जन्मान्तरेणाहमुक्तवान् तच्चानुसन्धाय वदामीति साक्षादुत्तरमुच्यते भगवता इत्यर्थः समाक्षिप्यते। एवं हि उत्तरेण पद्येन अवतारप्रकारम्, देहयाथात्म्यं, जन्महेतुञ्च प्रपञ्च्यते –

अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्।

प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया॥[1]

इति। अजायमानत्वाव्ययत्वसर्वभूतस्वामित्वादि गुणप्रकारमजहदेव सत्यसङ्कल्पेणात्ममायया च संभवामीति आपाततोऽर्थः। अजाव्ययशब्दप्रयोगेण प्रकृतिपुरुषयोरिव स्वरूपतो गुणतश्च विकाराः न सन्ति भगवत इत्युच्यते, उत कर्मकृतजन्ममरणनिवृत्तिपरत्वेन वा समुपयुक्तः, अनेन भगवतो हेयप्रत्यनीकत्वमुच्यते।**भूतानामीश्वर** इति पदप्रयोगेण कल्याणगुणाकारत्वाप्रच्युतिः उपलक्ष्यते। एवमन्यपरत्वेनापि वक्तुं शक्यते अजशब्दप्रयोगेण स्वरूपतः शरीरद्वारा च जन्मयुक्ताचित्क्षेत्रज्ञाभ्यां व्यावृत्तिरुच्यते, **अव्ययात्मा** इत्यात्मशब्दस्य स्वभावपरतया नञोऽत्यन्ताभावपरतया च कादाचित्ज्ञानसङ्कोचादिमतो मुक्तात् व्यावृत्तिः। **ईश्वर** शब्दप्रयोगेण नित्यासङ्कुचितज्ञानेभ्यो नित्येभ्यो व्यवच्छेदः। एतेन तत्तदवतारेषु तासु तास्ववस्थासु च पारमेश्वरस्वभावस्य सत एव स्वेच्छया तिरोधानमत्र सूचितम्। तच्चोक्तम् –**भवान् सर्वत्रैव त्वगुणितमहामङ्गलगुणः**[2], **ईशन्नपि महायोगी**[3], **व्यक्तमेष महायोगी परमात्मा**[4]इत्यादीन्यनेकानि वाक्यान्यत्र प्रमाणम्।

पद्ये समुपयुक्तप्रकृतिशब्देन **प्रकृतिं स्वामवष्टभ्य विसृजामि** इत्यत्रोक्तवत् न त्रिगुणा प्रकृतिरुच्यते, अवतारेऽपि तद्विग्रहस्य त्रिगुणोपादकत्वाभावात्। तच्चोक्तम् – **न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः, न तस्य प्राकृता मूर्तिमांसमेदोऽस्थिसंभवाः**[5] **इति**। अतोऽत्र अवतारोपयुक्तप्रकृतिशब्देन स्वभावार्थः समाक्षिप्यत इति अनेन निघण्टुवचनेन दृढीक्रियते

---

[1]**श्रीमद्भगवद्गीता** 4.12

[2]**वरदराजस्तवः** 16

[3]**भा.उ.**17.14

[4]**रामायणं युद्धकाण्डम्**.114.14

[5]**वायुपुराणम्**.34.40

–**प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे** इति। तत्र प्रकृतिशब्दः स्वभावार्थद्योतकः इत्युक्तं प्रमाणैः, किमर्थं श्लोके स्वभावार्थनिर्देशकतया **स्वाम्** इति पदप्रयोग इति चेत्, उच्यते स्वामिति निर्देशो जीवसाधारणत्रिगुणप्रकृतिव्यतिरिक्तत्वसंसूचनार्थं संप्रयुक्तः। अयमेव हि विषयः पूर्वमेव श्रीभाष्यस्थान्तरादित्यधिकरणेत्थं व्याख्यातं –**स्वमेव स्वभावमास्थाय, न संसारिणां स्वभावमिति**[1], तथाभूतं स्वभावमधिष्ठाय आत्मीयमायया संभवामीत्यर्थः। तत्र **माया** शब्दस्य **माया वयुनं ज्ञानम्** इति निघण्टुवचनेन ज्ञानमर्थः, एवं **मायया सततं वेत्ति प्राणिनां च शुभाशुभम्** इत्यादि प्रमाणवचनैः मायाशब्दस्य सर्वांशस्याप्याश्चर्यज्ञानवत्वाख्यो अर्थः संसूच्यते, अनेन भगवतः स्वेच्छावतरणत्वाख्योऽर्थः समाक्षिप्यते। अतः अपहत-पाप्मत्वादि समस्तकल्याणगुणात्मकत्वं सर्वमपि स्वस्वभावमजहदेव देवमनुष्यादि-सजातीयसंस्थानं कुर्वन् आत्मसङ्कल्पेन देवादिरूपः संभवामीति पद्यार्थः।कदा भवतो जन्म इति पृष्टस्य प्रश्नस्य प्रतिवचनमाह –

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥[2]

युगान्तर्गतकालानियमपरत्वाभिप्रायेण **यदा यदा** इति पदप्रयोगः कृतः, अर्थात् – इदानीमेव मम जननं, न तदानीमिति नियमाभावद्योतनार्थं यदा यदा इति वीप्सा संप्रयुक्तो वर्तते श्लोके। यदा यदा हि लोके वेदे समुपवर्णितस्य वर्णाश्रमधर्मसमाचरणस्य ग्लानिः, एवमधर्मस्योत्थानञ्च सञ्जायेते, तदा तदा अहमेव स्वसङ्कल्पेनोक्तप्रकारेण आत्मानं संसृज्य रक्षको भवामि इत्युच्यते। एवमुक्त्वा स्वावतारप्रयोजनमाह –

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे॥[3]

साधून् संरक्षितुं पापीन् दूरोत्सर्तुं, धर्मप्रतिष्ठापनार्थञ्च प्रत्येकस्मिन्नपि युगे अवतारयामीति सरलार्थः। उक्तेषु दुष्कृतदूरोत्सरणं, धर्मप्रतिष्ठापनञ्चेति द्वयं स्वयं परमात्मा

---

[1]**श्रीभाष्यम्**.1.1.21

[2]**श्रीमद्भगवद्गीता** 4.15

[3]**श्रीमद्भगवद्गीता** 4.16

 ISSN : 2277-2359

स्वप्रदेशे स्थित्वैव स्वायत्तसत्यसङ्कल्पेनैव कर्तुं शक्यते, अतः तन्न तस्यावतारप्रयोजनम्, अपि तु साधूनां रक्षणमेवेति भाष्यकारः अभिप्रैति। तत्र प्रश्नः – साधूनां संरक्षणमपि स्वसङ्कल्पेनैव कर्तुं शक्यते खलु, तदर्थं किमर्थमेवं अवतरति भगवानिति चेत्, तदुच्यते – साधवो हि नाम वेदोदितस्य धर्मस्य सदानुष्ठाशालिनः, वैष्णवाग्रेसराः, मत्प्रापणे संलग्नाः इत्यदिकं भाष्ये प्रोक्तम्। पद्योपयुक्तसाधुशब्दः न सामर्थ्यादि विषयः, तस्य दुष्कृतप्रतीति-परतया संसूचनात्, अतः तस्य सुकृतमित्यर्थः। ये च वेदोदितधर्मादिकं स्वजन्मप्रभृति विच्छेदाभावेन समनुष्ठितवन्तः सन्ति त एव साधव इत्युच्यन्ते। एवं ये च पूर्वोक्तप्रकारेण वेदमादृत्य देवतान्तराण्येव उपासते, ये च वैष्णवाः प्रतर्दनविद्यान्यायेन तत्तद्देवताविशिष्ट-वेषेणैव भगवन्तमुपासते, न तेषामवतारप्रदर्शने अत्यन्तं निर्बन्धः, तत्तद्देवताकञ्चुकितवेषेणैव तदपेक्षितसकलप्रदानोपपत्तेः, अतः तेभ्योऽपि विपरीताः, मद्भक्तवर्याः, वेदोदितयथाव-स्थितोपा यं प्राप्यं मामवलम्बितुं कृतप्रयत्नाः, वैष्णवाग्रेसराः ये संविलसन्ति लोके, तेषां त्राणार्थमेव मम संभव इत्यर्थः। त्राणं हि नाम **अनिष्टनिवर्तनपूर्वकेष्टप्रापणम्** एवंविधवैष्णवा-ग्रेसराणाम् अनिष्टश्च भगवदलाभः, तत्समाश्रयणपूर्वकतल्लाभेनैव च तस्यानिष्टस्य निवर्तनम् इति द्योतनायैव भाष्ये **मत्समाश्रयणे प्रवृत्ताः** इत्युक्तम्। एवं ये च **त्रुटि युगायते त्वामपश्यताम्**[1] इति भागवतपुराणोक्तप्रकारेण मद्दर्शनेन विना स्वात्मधारणपोषणादिकम् अलभमानाः क्षणमात्रकालं कल्पसहस्रमिति मन्वानाः, मद्दर्शनाभावात् सञ्जातदुःखेन प्रशिथिलसर्वगात्राः नितरां तपन्ति ते साधवः, तेषां मद्विश्लेषपरिक्लिष्टानां मत्स्वरूपचेष्टिताव-लोकनेन उज्जीवनाय संभवामि इत्युच्यते। एवं **परित्राणाय** इत्यत्रोपसर्गेण विविधानिष्ट-निवृत्तिपूर्वकविविधेष्टप्राप्तिः संसूच्यते। इत्थं साधूनामान्तरभयात्परित्राणमुक्त्वा इदानीं बाह्यभयात्परित्राणमुच्यते **दुष्कृतां विनाशाय च** इत्यनेन। अयमपि श्रीभाष्यस्थान्तरादि-त्यधिकरणेत्थमुक्तम् –'**साधवो ह्युपासकाः, तत्परित्राणमेवोद्देश्यम्, आनुषङ्गिकस्तु दुष्कृतां विनाशः, संकल्पमात्रेणापि तदुपपत्तेः**'[2]। भगवद्भक्तान् भागवतानुद्दिश्य क्रियमानदुःख-दायककर्मण एव दुष्कृतिरिति नाम, तत्कर्तृणां विनाशाय संभवामीत्युक्तम्। एवं दुष्कृतां तु

[1]**श्रीमद्भागवतम्** 10.31.15

[2]**श्रीभाष्यम्** 1.1.21

नात्यन्तविनाशः तच्चोक्तं –**रिपूणामपि वत्सलः**[1], **मच्छरैस्त्वंरणे शान्तस्ततः पूतो भविष्यसि**[2] इति। अपि तु विनाशशब्देन वैपरीत्यहेतुभूतराक्षसप्रभृतिशरीरग्रन्थ्यादि निवर्तनमुच्यते, तन्निवृत्तौ च तेषामपि धार्मिकविषयेषु प्रवृत्तिः सञ्जायत इत्ययमपि धर्मसंस्थापनार्थे पर्यवस्यति। एवम्भूतधर्मसंस्थापनार्थं युगादि नियमाभावेन संभवामीत्युच्यते।

**उपसंहारः**

एवम्भूतो भगवान् पारमार्थिकत्वेन नूनमवतरति इति जानतां प्रयोजनं प्रासङ्गिकाद् इत्थमुच्यते –

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥[3]

इति। अस्य निखिलहेयप्रत्यनीकस्य, समस्तकल्याणैकतानस्य श्रीमन्नारायणस्य अवताराख्यं जन्म एवं कर्म च अप्राकृतमिति तत्त्वतः यो वेत्ति, सः प्रारब्धपर्यवसानदेहं परित्यज्य मामेति पुनर्जन्म च न प्राप्यते इत्यर्थः। तथा वयमपि भगवतो श्रीकृष्णस्य भगवदवताररहस्यं संविज्ञाय परमप्रयोजनावाप्त्यै यतामहे।

**ग्रन्थसूची**

1. श्रीमद्भगवद्रामानुजविरचितब्रह्मसूत्रश्रीभाष्यम्, सुदर्शनसूरिप्रणीतश्रुतप्रकाशिकाव्याख्योपेतम्, श्रीमद्रङ्गरामानुजमुन्युपज्ञभावप्रकाशिकाव्याख्योपेतञ्च, श्रीनृसिंहप्रिया ट्रस्ट्, चेन्नै, 2006.

2. श्रीमद्भगवद्गीता, श्रीमद्भगवद्रामानुजविरचितभाष्येण, श्रीकवितार्किकसिंहसर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्तदेशिकविरचितया तात्पर्यचन्द्रिकया, श्रीमदभिनवदेशिक-वीरराघवार्यमहादेशिक-यतिविरचित-विशेषभूमिका-टिप्पणेन च समेता, Sri Uttamur Viraraghavachariar Centenary Trust, Chennai, 2004.

3. उपनिषद्भाष्यम्, श्रीरङ्गरामानुजमुनिप्रभृति विरचित केनाद्युपनिषदुपेतम्, श्रीमदभिनव-देशिक-वीरराघवार्यमहादेशिकविरचित-परिष्कर-उपनिषदर्थकारिका सहितम्, Sri Uttamur Viraraghavachariar Centenary Trust, Chennai, 2003.

[1] श्रीमद्रामायणम् युद्धकाण्डम् 50.53

[2] श्रीमद्रामायणम् युद्धकाण्डम् 41.68

[3] श्रीमद्भगवद्गीता 4.20

4. सिद्धान्तसंरक्षणम्, प्रकाशिका, श्रीवैष्णवसभा, बैङ्गळूरु 560021, 2000.

5. श्रीमन्निगमान्तमहादेशिकानुगृहीता अधिकरणसारावलिः, कुमारवेदान्ताचार्यानुगृहीतेन चिन्तामणिना समेता च, श्रीवण्शठकोपश्रीलक्ष्मीनृसिंहशठकोपयतीन्द्रमहादेशिकदिव्य-नियमनानुसारेण, कुरुच्चि. लक्ष्मीनृसिंहाचार्येण प्रकाशिता, 1940.

6. VisistadvaitaKosa, Compiled by Panditaraja Shri. U.Ve.D.J. Tatacharya, D.T. Swamy Publications, Tirupati, 2001.

# विशिष्टाद्वैतमतेन विध्यर्थनिरूपणम्

डा. ओ. आर्. विजयराघवन्
सहायकाचार्यः, न्यायविभागः,
गुरुवायूर्-परिसरः, त्रिशूर्

**कुञ्चिकापदानि**
विध्यर्थः ,अपूर्वः ,लिङर्थःयजेत ,कृतिसाध्यत्वम् ,इष्टसाधनत्वम् ,।

**शोधसारः**

लिङ्लोट्तव्यप्रत्ययानां शास्त्रेषु विधिशब्देन व्यवहृतानामर्थभूतो विधिः क इति विचारः दर्शनेषु दृश्यते। प्रबन्धेऽस्मिनपूर्वस्य, शब्दभावनायाः, आप्तेच्छायाश्च विध्यर्थत्व-खण्डनपूर्वकं विशिष्टाद्वैतमते कृतिसाध्यत्वं विध्यर्थ इति स्थाप्यते।

**उपोद्घातः**

चिकीर्षया खलु प्रवृत्तिः दृश्यते क्रियासु। इयं क्रिया इष्टसाधना, इयं क्रिया अनिष्टाननुबन्धिनी, इयं क्रिया कृतिसाध्या इति ज्ञानेनैव चिकीर्षा जायते। अतः एतादृश-ज्ञानस्य चिकीर्षाद्वारा प्रवृत्तिजनकत्वात् तज्ज्ञानविषयानां इष्टसाधनत्व – बलवदनिष्टाननु-बन्धित्व-कृतिसाध्यत्वानां प्रेरणापदवाच्यता, एतेषामेव विध्यर्थत्वञ्च। लिङ्-लोट्-तव्यप्रत्ययाः विधिशब्देन शास्त्रेषु प्रसिद्धाः। तेषां हि प्रत्ययानां विध्यर्थकत्वात् विधिशब्देन व्यवहारः। एतेषां लिङादिप्रत्ययानाम् अर्थभूतो विधिः क इति विवदन्ते शास्त्रज्ञाः।

अपूर्वं लिङाद्यर्थ इति प्राभाकराः। तन्न युक्तम्। शब्दातिरिक्तप्रमाणाविषये अपूर्वे लिङादिशक्तिज्ञानं न सम्भवति। प्रत्यक्षादिप्रमाणविषये घटादौ घटादिपदशक्तिग्रहः अनुभवसिद्धः। यदि तत् प्रमाणान्तरगोचरं तर्हि तस्यापूर्वत्वं न स्यात्। लिङादिशब्दबोधिते अपूर्वे शक्तिग्रह इति वक्तुं नशक्यम्, अन्योन्याश्रयत्वात्। लिङादिना बोधिते अपूर्वे पश्चात् व्युत्पत्तिः, व्युत्पत्तौ च सत्यां लिङादिनाबोधनमिति अन्योन्याश्रयः।

ननु विधिश्रवणदशायां काम्यकर्मवत् नित्यनैमित्तिककर्मणोः फलाश्रवणात् अन्वय-प्रतीत्यनुपपत्तेः इष्टसाधनत्वानुपपत्तेश्च नान्योन्याश्रयः। काम्यस्वर्गादि अन्यथानुपपत्या तद्

घटकतया पूर्वमेव प्रतीयते, तस्यैव कृतिसाध्यत्वात्। तदैव तदाकारेण व्युत्पत्तेरेव आपादनिकत्वात्। करणतुल्यसाध्यत्वं यागादिकं प्रथमं विषयत्वेनान्वेति, यागः कृति-साध्यमिति। पश्चात् करणत्वेनान्वयः। प्रथमं साध्याप्रतीतौ कारणत्वान्वयानुपपत्तेः। तदुक्तं-

कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।

साध्ये सङ्घटिताकारे करणत्वेनसम्मता ॥ [1]इति।

अत्रैवं विकल्प्यते – विधिश्रवणदशायां काम्यवत् नित्यनैमित्तिककर्मणोः फलाश्रवणात् अन्वयप्रतीत्यनुपपत्तिरित्युक्तं, किं सा प्रतीत्यनुपपत्तिः सामग्रीविरहात् शक्तिविरहाद्वा उत सहकारिविरहाद्वा इति।

नाद्यः संप्रत्ययभावशब्दस्य श्रवणमात्रादन्वयबोधात्। नापि शक्तिविरहात् पदार्थबोधे पदस्यैव शक्तत्वात्। नापि सहकारिविरहात् – प्रकृतिप्रत्ययव्यतिरेकेन सहकार्यन्तरान-पेक्षत्वात्। अतः प्रतीत्यनुपपत्यभाबात् किं साध्यं घटकं वा मध्ये प्रत्येतव्यं येन अपूर्वस्य वाच्यत्वं पर्यवस्येत्।

यत्तूक्तं प्रथमं विषयत्वेनान्वयः पश्चात्करणत्वेनान्वेतीति तदपि न युक्तम्। कृतिविषयत्वमेव साधनत्वं, साधनस्याविषयत्वात्। अतः अन्योन्याश्रयः तदवस्थैव।

ननु विमर्शबलादपूर्वसिद्धिः। तथा हि 'यजेतस्वर्गकामः' इति वाक्यश्रवणानन्तरं स्वर्गकामपदसमभिव्याहारात् धात्वर्थस्य यागस्य यागसाधनत्वमवगम्यते। क्षणध्वंसिनो यागस्य कथं स्वर्गसाधनत्वमिति विमर्शबलादपूर्वसिद्धिरिति चेत् किमयं विमर्शः स्मृतिरूपः उत अनुमानं वा ? पूर्वमज्ञातस्यापूर्वस्य स्मृतिर्नोपपद्यते। अपूर्वस्यानुमानमपि न सम्भवति। अपूर्वानुमानस्य यजेतस्वर्गकाम इति वाक्यार्थज्ञानाधीनत्वात्, वाक्यार्थज्ञानस्य च अपूर्व-ज्ञानाधीनत्वात्। ननु लिङः कार्यमर्थः।'गामानय' इत्यदि लौकिकवाक्ये आनयनादि क्रियाकार्यत्वेन बुध्यते इति क्रियारूपं कार्यं लिङा बुध्यते। कार्यं नाम कृतिसाध्यम्। तथा च आनयनादि क्रिया कृतिसाध्यत्वेन लिङा बुध्यते। यजेतेत्यादौ यागादि क्रियायाः कृति-साध्यत्वं बाधितं तस्याः क्षणध्वंसितया स्वर्गाद्यहेतुत्वेन कार्यत्वासम्भवात्। कार्यं हि इष्टं तत्साधनंवा। अतः अपूर्वं कार्यत्वेन लिङा ग्राह्यं चेत् अपूर्वे लक्षणास्यात्। लोके हि शब्दस्य

 ISSN : 2277-2359

यदर्थाभिधायकत्वं तदन्यथा करणं हि अयुक्तम्। अतः कार्यं लिङाद्यर्थः, तच्च वेदे अपूर्वम् इत्युक्तिः न समीचीनम्।

कौमारिलास्तु "**अभिधां भावनामाह अन्यामेवलिङादयः**"[2] इति शब्दभावनैव लिङर्थ इति वदन्ति। सा च प्रतीतिविसम्वादादिना प्रतिहतम्। तथा हि शब्दभावना नाम शब्दगतो अभिधाख्यो व्यापारः। तस्य प्रवर्तकत्वाभावात् लिङर्थत्वं न सम्भवति। प्रवृत्तिप्रयोजकत्वं यत् क्लृप्तं तस्यैव खलु लिङर्थत्वं युक्तम्। न खलु कोऽपि लिङादिशब्द-गतमभिधानरूपं व्यापारं ज्ञात्वा प्रवर्तते। अतः तस्य लिङर्थत्वं न युक्तम्। लिङ्-घटितं वाक्यं श्रुत्वा लिङ् स्वव्यापारवाचकः। अतः मया प्रवर्तितव्यमिति न कोऽपि मनुते। नापि यजेत इति वाक्येन यागादिस्वरूपे लिङादिगतव्यापारे च समुच्चित्यप्रतिपादितेऽपि यागादौ प्रवर्तमानो दृश्यते।

किञ्च लिङादिनिष्ठो व्यापारः किं लिङादिः ज्ञायमानस्सन्नेव प्रवर्तयतीति ज्ञायमान-रूपो वा लिङादिनिष्टशक्तिविशेषो वा? उभयथापि अव्युत्पन्नस्य ज्ञायमानत्वलक्षणव्यापार-शक्तिलक्षणाव्यापारयोश्च लिङः शक्तिः इत्याकारकज्ञानरहितस्यापि पुरुषस्य लिङः श्रवणे प्रवृत्तिः स्यात्।

शक्तिज्ञानस्य सहकारिकारणत्वे शक्तिज्ञानसापेक्षायाः तस्याः शक्तेः निर्विषयत्वा-सम्भवात् शक्तेः विषयः वाच्यः स्यात्। न च स्वव्यापारे लिङादिः क्वचिछक्तः। सर्वेषामपि घटादि शब्दानां स्वव्यापारातिरिक्ते एव हि अर्थे व्युत्पत्तिः। अतः लिङ् न स्वव्यापारवाचकः शब्दत्वात्, घटादि शब्दवत् इत्यनुमानम्। अभिधा इति शब्दोऽपि अभिधेति पदस्य – शब्दस्य योऽर्थः स्वव्यापारः तं नाभिधत्ते। अपि तु स्व-स्वेतर-शब्दसामान्यव्यापारमभिधत्ते।

ननु कथं व्यापारातिरिक्ते एव इति नियमः। अभिधा व्यापारादि शब्दानामेव तत्र व्युत्पत्तेरिति चेत् अभिधादयः शब्दाः तद्व्यक्तित्वेन स्वव्यापारं नाभिधत्ते। यद्यपि व्यापार-त्वावच्छेदेन स्वव्यापारोऽपि अभिहितः शब्दशब्दस्यापि स्वाभिधानवत्तथापि स्वव्यापाराति-रिक्ते एव साक्षात् प्रतीयते, पश्चात् समानप्रकारतया सोऽपि। यथा श्रुङ्गग्रहणेन गोव्यक्ति-प्रदर्शनं तद्वत् अभिधा शब्दः तद्व्यक्तित्वेन स्वव्यापारं नाभिधत्ते व्यापारवाचिनोऽपि स्व

 ISSN : 2277-2359

व्यापारानभिधायित्वे तदतिरिक्तशब्दस्य व्यापारमात्राभिधायित्वं दुर्घटम्। अन्यथा तदर्थक-शब्दान्तरवैय्यर्थ्यापत्तिः। एवं शब्दशब्दाभिधायित्ववत् लिङोऽपि लिङ् वाच्यतापत्तिः। अतः शब्दसामान्यव्यापारे तत्प्रवृत्तिः। अभिधारूपसामान्यधर्मेण अभिधाशब्दव्यापारस्यापि अनुगमः। स्वव्यापारस्यापि अभिधाशब्दार्थे सर्वशब्दव्यापारे अन्तर्भावादेव अभिधा इति शब्दस्य अभिधेयं यन्निमित्तं शब्दव्यापारत्वं तस्य शब्दव्यापारत्वेन सामान्याकारेण ज्ञातत्वात् अभिधाशब्दस्य स्वव्यापारे शक्तिग्रहोपपत्तिः। लिङादौ व्यापारस्य प्रतीत्यभावान्न व्युत्पत्तिः।

लिङैव प्रतीतिरिति चेत्किं व्युत्पन्नेन लिङादिना प्रतीयते व्यापार उत अव्युत्पन्नेन। आद्ये लिङादेः स्वव्यापारे ज्ञाते तत्र शक्तिग्रहोपपत्तिः तत्र शक्तिग्रहे सति स्वव्यापारप्रतीतिः इति अन्योन्याश्रयः। द्वितीये तु अज्ञातलिङ्व्यापारशक्तिकस्य पुरुषस्य व्यापारप्रतीरिति चेत् व्यापारान्तरस्यापि प्रतीतिप्रसङ्गः।

अथ "**विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-सम्प्रश्न-प्रार्थनेषुलिङ्**"[3] इति सूत्रे विधिः प्रेरणा इति भाष्यम्। प्रेरणा नाम प्रवृत्तिजनके ज्ञानविषयो धर्मः। जानाति, इच्छति, प्रवर्तते, इति हि क्रमः। लिङ्श्रवणानन्तरं यमर्थं ज्ञात्वा चिकीर्षया प्रवर्तते पुरुषः स एव लिङर्थः। स च इष्टसाधनत्वमेवेति मण्डनमिश्रः। इष्टसाधनत्वज्ञानं विना प्रवृत्यजननात् इति।

तन्न युक्तम्। इष्टसाधनत्वं मात्रं न लिङर्थः। 'तवेदं इष्टसाधनं अतः कुरु' इति लोके परिदृश्यमानस्य प्रयोगस्य अनुपपत्तिः स्यात्। तद्यथा 'कुरु' इत्यत्र इष्टसाधनत्वं लोडर्थः तस्य धात्वर्थक्रियायामन्वयः। 'अतः' इत्यस्य इष्टसाधनत्वात् इत्यर्थः। इयं क्रिया इष्टसाधनं इष्टसाधनत्वात् इति वाक्यार्थः पर्यवस्यति। स च अनुपपन्नः पुनरुक्तत्वात्। न च क्रियायां आदरात् एवं पुनरुक्तिः इति वाच्यं, प्रतीतेः आदरनिमित्तकत्वाभावात्। एकस्यैव इष्ट-साधनत्वस्य हेतुतया साध्यतया च निर्देशायोगाच्च।

अथ आप्तेच्छैव विध्यर्थः। वेदेऽपि लिङादेः वक्त्रभिप्रायार्थकत्वावश्यकत्वात् वक्ता सर्वेश्वरः सिध्यति इति उदयनाचार्यमतम्। एवं च लिङ्श्रवणानन्तरं क्रियायां वक्त्रभिप्राय-विषयत्वं ज्ञात्वा ततः इष्टसाधनत्व-कृतिसाध्यत्वादिकं अनुमाय चिकीर्षया क्रियादौ प्रवर्तते

इति तेषामाशयः। 'आप्तस्य इष्टमिदं अतो ममेदं कार्यम्' इत्यत्र इदं आप्तेष्टं, आप्तेष्टत्वात् इति वाक्यार्थस्य वक्तव्यतया पूर्वप्रदर्शितरीत्या पौनरुक्त्यदोषः।

ननु '**विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-सम्प्रश्न-प्रार्थनेषु लिङ्**'[4] इति सूत्रे निमन्त्रणं श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनं, आमन्त्रणं कामचारानुज्ञा, अधीष्टं सत्कारपूर्वकव्यापारः, सम्प्रश्नः विचार्य-निर्धार्य-विषयकाशयः, प्रार्थना याञ्चा, इति विवरणात् सर्वस्यापि अस्य वक्तृगत-इच्छाविशेषरूपत्वात् विधिरपि इच्छाविशेषरूप एव। विधिः वक्तृसमवेतेच्छा लिङर्थत्वात् , निमन्त्रणादिवत् इति चेन्न। सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे "**अताप्योः समर्थयोः लिङ्**[5]', '**हेतुहेतुमतोर्लिङ्**'[6], '**कामप्रवेदनेऽकच्चितिगर्हायां च**"[7] इत्यादिसूत्रैः सम्भावना-गर्हाश्चर्य-कामप्रवेदन-हेतुहेतुमत्भावादिषु अर्थेष्वपि लिङ्विधानात् वक्तृसमवेत-इच्छात्वरूपसाध्याभाववत्सुतेषु लिङर्थत्वरूपहेतुसत्वात् व्यभिचारः।

यदि विधिरूपैकशब्दवाच्यत्वात् वक्त्रभिप्रायादीनामपि विधित्वं इष्यते तदा हर्यादि-शब्दवाच्यमानमपि एकत्वप्रसङ्गात् अनिष्टप्रसङ्गरहित एकशब्दवाच्यैकत्वस्य उदाहरणमेव दुर्लभं भवेत्।

ननु इष्टसाधनत्वादेः लिङर्थत्वे निषेधवाक्येषु, 'न कलञ्जं भक्षयेत्' इत्यादौ अनुपपत्तिः 'प्रतियोग्यभावौ तुल्ययोगक्षेमौ' इति न्यायेन कलञ्जभक्षणे इष्टसाधनत्वाभावस्यैव बोधनीयतया तस्य बाधितत्वात्। कलञ्जभक्षणस्यापि तृप्तिरूपइष्टसाधनत्वात्। अतः आप्तेच्छाविषयत्वमेव लिङर्थः तथा सति, न कलञ्जं भक्षयेदित्यादौ लिङर्थस्य आप्तेच्छाविषयत्वस्य अभावः कलञ्जभक्षणे अबाधितः इति चेत् इष्टसाधनत्वस्य लिङर्थत्वमते अयं दोषः स्यादेव। कृति-साध्यत्वं लिङर्थः इति ब्रूमः। न च कृतिसाध्यत्वस्य लिङर्थत्वपक्षेऽपि कर्तव्यमिदं, 'अतः कुरु' इति सहप्रयोगानुपपत्तिः, इदं कर्म कृतिसाध्यं कृतिसाध्यत्वात् इति वाक्यार्थे पौनरुक्त्यं, हेतुसाध्ययोः ऐक्यप्रतीतिश्च स्यात् इति वाच्यम्।

'ब्राह्मणस्य कर्तव्यमिदम्, अतः तवापि कर्तव्यं' इतिवत् सामान्यविशेषविवक्षया पौनरुक्त्यभावात्। यदि सामान्यविशेषभावेन प्रतीयते इति अत्यन्त ऐकार्थ्यविवक्षायां तत्रापि

प्रयोगायोगात्। कर्तव्यं कर्तृविशेषविषयं कुरु इति तद्विशेषविवक्षया इत्यविरोधः, इष्टसाधनत्वं तु व्यभिचारात् विरोधः।

एवं कृतिसाध्यत्वस्य लिङर्थत्वपक्षे कलञ्जभक्षणं न कर्तव्यमिति वाक्यार्थस्य अबाधात् न दोषः। कर्तृव्यापारसाध्यत्वमेव कर्तव्यत्वम्। तदुक्तं वेदार्थसङ्ग्रहे 'यजदेवपूजायां' इति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयः अभिदधतीति न किञ्चिदनुपपन्नं कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः। भूतवर्तमानादिकं अन्ये वदन्ति। लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्ति"[8] भाष्येऽपि 'अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेः वाच्यं इत्यध्यवसीयते। धात्वर्थस्य च यागादेः अग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपतासमाराधितात् परमपुरुषात् फलासिद्धिश्चेति '**फलमत उपपत्तेः' इत्यत्र प्रतिपादयिष्यते**"[9] इति भाष्ये कर्तृव्यापारसाध्यतामात्रं इति निष्कृष्टार्थप्रदर्शनायोक्तम्। प्रतिपत्तिप्रकारस्तु यजेत इत्यादौ स्वव्यापारसाध्यभागादिविशिष्ट इति कर्तृप्राधान्येनैव। उक्तञ्च दीपे कर्त्रधिकरणे "यजेत उपासीत इति कर्तरि लकारः। अतः **कर्तारमेव बोधयति शास्त्रम्**"[10]। वेदार्थसङ्ग्रहे अपि 'स्वर्गकामो यजेत' इत्येवमादिषु लकारवाच्यकर्तृविशेषसमर्थकानां स्वर्गकामादिपदानां नियोज्यविशेषसमर्थकत्वं शब्दानुशासनाविरुद्धम् इति प्रतिपादितम् सर्वतन्त्रस्वतन्त्रैः श्री वेङ्कटनाथार्यैरपि एवं प्रसाधितं :-

**"धात्वर्थस्यैव रूपं किमपिहि कथयन्त्यत्र सर्वे लकाराः**
**कर्तृ व्यापारसाध्यं त्वभिदधतिविधिप्रत्ययास्तल्लिङ्गाद्याः ।**
**वैघट्यं द्वारसिद्धिः प्रशमयति तथा सन्ति लोकोक्तिभेदाः**
**सिद्धं शब्दानुशिष्ट्यात्विदमुचितमिति स्थापितं भाष्यकारैः"**[11]॥ इति

**उपसंहारः**

अनेन सर्वेभ्यो वाक्येभ्यः आख्यातार्थकर्तृविशेष्यकः शाब्दबोधो भवति।इयञ्च रीतिः कर्तरि लकारस्थले। कर्मणि लकारस्थले कर्मविशेष्यकः शाब्दबोधः, भावाख्यातस्थले धात्वर्थविशेष्यकः शाब्दबोधः आचार्याणां अभिमतः। द्वितीयाद्यन्तपदार्थानां विभक्त्यर्थद्वारा धात्वर्थे अन्वयः इति अविरुद्धम्। धात्वर्थस्य तिङर्थे अन्वय इत्यपि प्रत्ययार्थप्रधानं न्याय-

सिद्धम्। तिङर्थः कः न कृतिः, "लःकर्मणि च भावे चाकर्मकेभ्यः"[12] इति कर्तृकर्माद्यर्थे लकारानुशासने न तद्विरोधात्। तथा च कर्तुः कर्मणो वा लकारार्थस्यैव विशेष्यतम्। प्रथमान्तार्थस्यापि तत्रैव अभेदेनान्वयः। तथा च 'देवदत्तः तण्डुलं पचति' इत्यत्र देवदत्ताभिन्नः तण्डुलकर्मकपाककर्ता, 'देवदत्तेन पच्यते तण्डुलः' इत्यत्र तण्डुलाभिन्नं देवदत्तकर्तृकपाककर्म इत्यादिबोधस्स्यात्। 'आचार्यः प्रयाति तस्य पादयोः अभिवादय' इत्यत्र प्रधानस्य आख्यातार्थस्य कर्तुः तच्छब्देन परामर्शात् पादयोरन्वयोऽप्युपपन्नो भवति। भावप्रधानमाख्यातमिति निरुक्तवचनं तु आर्थिकप्राधान्यपरतया नेयम्। सर्वेऽपि कथञ्चिदेव तद्वचनं निर्वहन्ति।

**अन्त्यसूची**

1. न्यायमञ्जरी 98.
2. तन्त्रवार्तिकम् 1-1-2.
3. अष्टाध्यायी 161-3-3.
4. अष्टाध्यायी 3-3-161
5. अष्टाध्यायी 3-2-126
6. अष्टाध्यायी 3-3-146
7. अष्टाध्यायी 3-3-153
8. वेदार्थसंग्रहः पु 163
9. श्रीभाष्यम् पु 71
10. वेदान्तदीपः पु 460
11. तत्वमुक्ताकलापः अद्रव्यसरः 94
12. अष्टाध्यायी 69-4-3

**उपयुक्तग्रन्थसूची**

1. अष्टाध्यायीसूत्रपाठः – महर्षिपाणिनिविरचितः, संपादकः - ब्रह्मदत्तजिज्ञासुः, राम लाल कपूर ट्रसट्, नव देहली, 2012.

2. **तत्वमुक्ताकलापः – वेदान्ताचार्यः**, vptv kainkaryam trust, kanchipuram, 2018
3. **वेदान्तदीपः – श्रीभगवद्रामानुजाचार्यः**, edited by v s vijayaraghavacaraya, 2018.
4. **श्रीभाष्यम् – श्रीभगवद्रामानुजाचार्यः**, edited by v s vijayaraghavacaraya, 2018.
5. **वेदार्थसंग्रहः – श्रीभगवद्रामानुजाचार्यः ,काञ्चीपुरम् ,जमतसंरक्षणसमितिःरामानु ,** .2019

# वृष्टिसूचना

**डा.गिरीष् एम्.पि**

सहायकाचार्यः, ज्योतिषविभागः

सर्वकारीयसंस्कृतविद्यालयः, त्रिपुणित्तुरा

कालेऽस्मिन् बहुचर्चितेषु प्रधानविषयेषु प्रमुखो भवति वृष्टिप्रश्नः। सर्वचराचराणां सुस्थितये जलमत्यन्तमपेक्षितमिति न खलु कथनीयम्। जलस्य प्राधान्यमवगम्य पुरातन-कालादारभ्यैव जनाः देवतात्वं परिकल्प्य आराधितवन्तः। उक्तञ्च-

इमाःआपःशिवाःसन्तुशुभाः शुद्धाश्च निर्मलाः।
पावनाःशीतलाश्चैव पूताःसूर्यस्य रश्मिभिः॥[1]

अधिकतया वयं वृष्टिजलमाश्रित्यैव जीवामः। यस्मिन् वर्षे वृष्टेःन्यूनता सम्भवति तस्मिन् वर्षे जलदौर्लभ्यं निश्चयेन भवति। यस्मिन् वर्षे वृष्टेः आधिक्यं सम्भवति तस्मिन् वर्षे जलोपप्लवः च। उभावपि क्लेशाय एव। आधुनिकयन्त्रसामग्र्यः सन्ति चेदपि वृष्टेः गणना सम्यक् न प्रचलति। जनाः परिहासरूपेण इदानीमपि कथयन्ति आकाशवाणीसंस्थायाः सूचनाप्रकारेण अद्य वृष्टिः भवेत् न वा भवेदिति।

किन्तु कृषिकर्म अवलम्ब्य जीवनं नीताः पूर्वजाः ज्योतिश्शास्त्रसाहाय्येन वृष्टिगणनां सम्यक् कृतवन्तः इति ज्योतिश्शास्त्रग्रन्थेभ्यः अवगन्तुं शक्यते। किमधिकं इदानीन्तनकाले अपि मेषविषुसङ्क्रमकाले वर्षपर्यन्तस्य वृष्ट्याद्यवस्थां सम्यक्सूचयन्ति। तत्तु केरलेषु विषुफलं इति प्रसिद्धमेव। तत् पञ्चाङ्गेषु सूच्यते च। एवं वृष्ट्यवस्थां पूर्वमेव अवगन्तुं शक्यते चेत् कृषिकर्मादिषु बहूपकाराय भवेत्।

तदर्थं मेषविषुक्रमकालनक्षत्रादिनिरूपणेन वृष्टिलक्षणं कथमिति अत्र सूचयति। मेषसङ्क्रमः अश्विनीनक्षत्रे कालेवर्षकृत्। यमनक्षत्रे जनहतिः सुभिक्षञ्च। कृत्तिकानक्षत्रे राजोप-द्रवः, रोहिण्यां उर्वीसुराणां क्लेशः, मृगशिरसि पशुहतिः अल्पवृष्टिः च। आर्द्रायाम् अभीष्ट-

[1]विष्णुसंहिता.26/11

वर्षं धान्यक्षयञ्च, पुनर्वसुनक्षत्रे आदौ वर्षणमुद्भवेत्। पुष्ये सस्यहानिः बहुवर्षञ्च। आश्लेषायां अतीववृष्टिः तस्करभयः युद्धभीतिश्च।

मघानक्षत्रे अधिकवृष्टिः नृपभयं धान्यक्षयः च। आर्यमभगयोः उभे नक्षत्रे शूद्र-विनाशनं महीसुधाशानां विनाशनं सूचयति। हस्तानक्षत्रे क्षेमारोग्यसुभिक्षकृत्। चित्रा तु बहून् अनर्थान् स्वल्पं वर्षम् अरोगतां च कुरुते। स्वातीनक्षत्रे भूरिवर्षं सुभिक्षं च। शूर्पे शूद्रविपत् अरोगता वृष्टिहानिः च। अनुराधा ज्येष्ठा च धान्यक्षयं प्रभूतां वृष्टिं च सूचयति।

मूलं महतीं वृष्टिं सूचयति। पूर्वाषाढायां सस्याभिवृद्धिं महतीं वृष्टिं प्रान्ते विनाशं च करोति। उत्तराषाढानक्षत्रे तु स्वल्पवृष्टिं सूचयति। श्रवणनक्षत्रे महतीवृष्टिं सस्याभिवृद्धिं च सूचयति। धनिष्ठायाम् आदौ वृष्टिः चेदपि स्वकाले वर्षणं न। वारुणे भाद्रे च बह्वी वृष्टिः कुधान्यवर्धनं च। उत्तरभाद्रपदे लघ्वीवृष्टिः पुण्यकर्माल्पता च। रेवत्यां स्वोचिते काले एव बह्वीं वृष्टिं सूचयति।[1] अश्विन्यादिरेवतिपर्यन्तनक्षत्रेषु किं नक्षत्रं मेषविषुसङ्क्रमदिने भवति तदनुसारेण वृष्ट्याद्यवस्था अत्र सूचिता-

---

[1]प्र.मा.15/42-49

काले वर्षकृदश्विभं जनहतिं कुर्यात्सुभिक्षं यमो राजोपद्रवमल्पवर्षमनलोऽथोर्वीसुराणं विपत्।
आदौ वृष्टिरजे पुनः पशुहतिः सौम्येऽल्पवृष्टिः पुनः कुर्याद्वर्षमभीष्टमन्तकरिपर्द्धान्यक्षयं वा मनाक्॥
आदौ वर्षणमुद्भवेच्च पशुरुग्व्याधिश्च नृणां महान् दुर्वृत्तोद्धतिरत्र मातरि गुरौ सस्यं न वर्षं बहु।
सार्पेवृष्टिरतीव तस्करभयं युद्धं च भीमं पुनर्वृष्टिःस्यात् पितृभेधिकं नृपभयं किञ्चच्च धान्यक्षयः॥
करुतः शूद्रविनाशनं क्षयमपि तद्वन्महीसुधाशानाम्। अपि च सुभिक्षं भूम्यामर्यमभगयोरुभे च नक्षत्रे॥
क्षेमारोग्यसुभिक्षकृत्सवितृभं चित्रा त्वनर्थान् बहून् वर्षं स्वल्पमरोगतां च कुरुते कुर्यात् पुनर्वायुभम्।
वर्षं भूरि सुभिक्षमप्यवनिदेवर्द्धिं च शूद्रापदम् शूर्पे शूद्रविपत्सुभिक्षनृगदाः सर्वत्र नो वर्षणम्॥
धान्यक्षयं वृष्टिमपि प्रभूतां करोति मित्रो मघवा तथैव। गोमत्र्यरुग् ब्राह्मणकर्मविघ्नान् करोति वृष्टिं महतीं च मूलम्॥
सस्याभिवृद्धिं महतीञ्च वृष्टिं प्रान्ते विनाशञ्च करोति तोयम्। स्वल्पं हि वर्षं विदधाति विश्वं सस्यञ्च वर्षञ्च महत्मुकुन्दः॥
आदौ वृष्टिर्वर्षणं न स्वकाले धान्यं किञ्चित्क्षीयते भे वसूनाम्। बह्वी वृष्टिर्वर्द्धते वा कुधान्यं सत्यब्दादौ वारुणे च॥
वृष्टिर्लघ्वी पुण्यकर्माल्पता च बुध्न्याह्वे स्युर्मानवाः स्वल्पसत्वाः।बह्वीवृष्टिः स्वोचिते काल एव स्याद्रेवत्यां मेदिनी सत्सुभिक्षा॥

 ISSN : 2277-2359

| सङ्ख्या | नक्षत्राणि | अवस्था |
|---|---|---|
| 1 | अश्विनी | वृष्टिः |
| 2 | भरणी | सर्वनाशः,अल्पवृष्टिः |
| 3 | कृत्तिका | अल्पवृष्टिः,राजोपद्रवम् |
| 4 | रोहिणी | अधिवृष्टिः |
| 5 | मृगशिरः | अल्पवृष्टिः |
| 6 | आर्द्रा | वृष्टिः |
| 7 | पुनर्वसु | कालात्पूर्ववृष्टिः |
| 8 | पुष्यम् | अधिकवृष्टिः |
| 9 | आश्लेषा | अत्यधिकवृष्टिः |
| 10 | मघा | अधिकवृष्टिः |
| 11 | पूर्वफाल्गुनी | नाशः |
| 12 | उत्तरफाल्गुनी | नाशः |
| 13 | हस्ता | वृष्टिः |
| 14 | चित्रा | अल्पवृष्टिः |
| 15 | स्वातिः | अधिकवृष्टिः |
| 16 | विशाखा | अनावृष्टिः |

| | | |
|---|---|---|
| 17 | अनुराधा | अधिकवृष्टिः |
| 18 | ज्येष्ठा | अधिकवृष्टिः |
| 19 | मूलम् | अधिकवृष्टिः |
| 20 | पूर्वाषाढा | अधिकवृष्टिः |
| 21 | उत्तराषाढा | अल्पवृष्टिः |
| 22 | श्रवणा | अधिकवृष्टिः |
| 23 | धनिष्ठा | आदिकालवृष्टिः |
| 24 | शततारा | अधिकवृष्टिः |
| 25 | पूर्वाभाद्रपदा | अधिकवृष्टिः |
| 26 | उत्तराभाद्रपदा | अल्पवृष्टिः |
| 27 | रेवती | वृष्टिः |

**मेषसङ्क्रमतिथिफलम्**

मेषसङ्क्रमः प्रतिपत्तिथौ भूः वर्षविहीना, द्वितीयायां तृतीयायां च निजसमये एव वृष्टिः धान्यस्तु अल्पा एव। चतुर्थ्यां तिथौ बह्वी वृष्टिः अनर्थविघ्ननिचया ज्ञेयाः। पञ्चम्यां बहुवर्षसस्यविभवाः, षष्ठ्यां महत् युद्धं किञ्चित् धान्यहतिः अल्पवृष्टिः च। सप्तम्यां काले वर्षं नृपतेरुपद्रवं पुनश्च उचितां वृष्टिं च कुर्यात्।

विषुवे अयने अष्टमी यदि बहुधान्यम् उचितवृष्टिः च। तत्रगा नवमी बहूनि सस्यानि बहून् अनर्थान् च कुरुते। तत्र दशमी चेत् बहवः अनर्थाः शोका बह्वीवृष्टिः च। एकादश्यां बहुवर्षकुधान्यर्द्धिः नृणां लघ्वी विपच्च। द्वादश्यां तद्वद् विश्वतिथौ स्वसमये बहुवर्षणं उद्धताः

तस्कराः सन्ति च। चतुर्दश्यां प्रारम्भे बहुवर्षणं तच्च मण्डलगतं काले तु न। पर्वणि अधिकं वर्षं भूरियुद्धं उन्नता धान्यर्द्धिः अपि।[1]

**सङ्क्रमकरणफलम्**[2]

विषुवे सिंहकरणे सति बहुवर्षः धान्यसम्पदः अनर्थाः च। व्याघ्रे तु समुचितवर्षः पशुनाशः किञ्चन दुर्भिक्षः च। वराहकरणञ्चेत् अन्ते सर्वत्र वृष्टिः न बह्वी विपच्च। खरे गोधनधान्यवृद्धिः बह्वी मण्डलस्था वृष्टिःच। गजे आदौ अतीववृष्टिः अन्ते न। गवि अन्यथा बहवः रोगाः च स्युः विष्टौ गवां रुग् बहुसस्यसम्पद् काले वृष्टिः च। विष्ट्यां यथैव शकुने तथैव विशेषात् बहवः अनर्थाः भवन्ति। चतुष्पदे अनल्पः वर्षः प्रारम्भनाशी अब्दः बहुधान्यहानिः च। नागे बह्वी वृष्टिः सस्यसम्पच्च। किंस्तुघ्ने अल्पः धान्यनाशः अथ स्वीये काले वृष्टिः स्यात् अन्ते अखिलानां सस्यानां समृद्धिः सम्भवेच्च।

---

[1] प्र.मा.15/50-54

प्रतिपद्विषुवति यदि भूवर्ष विहीना पुनर्द्वितीया चेत्। यदि च तृतीया वर्षं निजसमये भवति धान्यमल्पं च॥
बह्वी वृष्टिरनर्थं विघ्ननिचया ज्ञेयाश्चतुर्थ्यां तिथौ पञ्चम्यां बहुवर्षसस्यविभवाः षष्ठ्यां तु युद्धं महत्।
किञ्चिद्धान्यहतिश्च वृष्टिरबहुःकुर्यात् पुनस्सप्तमी काले वर्षमुपद्रवं च नृपतेर्वृष्टिं पुनश्चोचिताम्॥
अष्टम्ययने विषुवे यदि बहुधान्यमुपचितवर्षं च। सस्यानि बहूनि बहून् कुरुतेऽनर्थांश्च तत्रगा नवमी॥
बहवोऽनर्थाः शोका बह्वी वृष्टिश्च तत्र यदि दशमी। बहुवर्षकुधान्यर्धी चैकादश्यां विपनृणां लघ्वी॥
द्वादश्यां बहुवर्षाणां स्वसमये सन्त्युद्धतास्तस्करास्तद्वद्विश्वतिथौमहीध्रयगलीतिथ्यां पुनर्वर्षणम्।
प्रारम्भे बहुतश्च मण्डलगतं काले तु नो वर्षणम् युद्धं पर्वणि भूरिवर्षमधिकं धान्यर्धिरप्युन्नता॥

[2] प्र.मा.25/55-59

बवकरणे सति विषुवे बहुवर्षं धान्यसम्पदोऽनर्थाः व्याघ्रे समुचितवर्षं पशुनाशःकिञ्चन च दुर्भिक्षम्।
न चावसाने न च वृष्टिरादौ नान्तश्च सर्वत्र विपच्च बह्वी कोले खरे गोधन धान्य वृद्धिर्वृष्टिश्च बह्वी खलु मण्डलस्था॥
आदौ गजे वर्षमतीव नान्ते गव्यन्यथा स्युर्बहवश्च रोगाः।
विष्टौ गवां रुग्बहुसस्यसम्पद्वृष्टिश्च कालेबहवोऽप्यनर्थाः॥
यथैव विष्ट्यां शकुने तथैव भवन्त्यनर्था बहवो विशेषात् चतुष्पदे वर्षमनल्पमब्दः प्रारम्भनाशी बहुधान्यहानिः॥
बह्विवृष्टिः सस्यसम्पच्चनागे किंस्तुघ्नऽल्पो धान्यनाऽथ वृष्टिः।
स्वीये काले संभवेदेव चान्ते सस्यानां स्याच्चाखिलानां समृद्धिः॥

रवेः मेषसङ्क्रमः मेषस्य जूकस्य मृगस्य च उदये यदि वृष्टिः स्वल्पा, सिंहस्य तु मण्डलगामी वृश्चिकस्य मध्यमवृष्टिः। इतरराशिषु सङ्क्रमश्चेत् बहुवृष्टिश्च। एवं सङ्क्रमदिनस्य तिथि,करण,राशि,ग्रहस्थितिं च सम्यक् निरीक्ष्य वृष्ट्यवस्थाम् अवगन्तुं शक्यते न तु नक्षत्रेनैकेन।

गतवर्षीयसङ्क्रमदिवसनक्षत्राण्यत्र सूच्यन्ते।

| कोलम्बवर्षः | क्रिस्तवर्षः | नक्षत्रम् |
|---|---|---|
| 1179 | 2004 | श्रवणा |
| 1180 | 2005 | मृगशिरः |
| 1181 | 2006 | चित्रा |
| 1182 | 2007 | शततारा |
| 1183 | 2008 | पुष्या |
| 1184 | 2009 | ज्येष्ठा |
| 1185 | 2010 | रेवती |
| 1186 | 2011 | मघा |
| 1187 | 2012 | उत्तराषाढा |
| 1188 | 2013 | कृत्तिका |
| 1189 | 2014 | हस्ता |
| 1190 | 2015 | धनिष्ठा |
| 1191 | 2016 | पुनर्वसु |

| | | |
|---|---|---|
| 1192 | 2017 | विशाखा |
| 1193 | 2018 | उत्तराभाद्रपदा |
| 1194 | 2019 | आश्लेषा |
| 1195 | 2020 | पूर्वाषाढा |
| 1196 | 2021 | भरणी |
| 1197 | 2022 | रेवती |

एवं प्रकारेण मेषसङ्क्रमादिदिनानां पञ्चाङ्गद्वारा प्रत्येकं वर्षस्य वृष्टेः उपलब्धतां पूर्वमेव ज्ञातुं शक्यते। एतेन कृषेः उत्पादनं वर्धयितुं तटीयक्षेत्रेषु निवसतां जनानां सुरक्षां सुनिश्चितं कर्तुं च शक्यते। वराहमिहिराचार्यस्य बृहत्संहिता इत्यादयः ग्रन्थाः अस्य आधारः।

**परिशीलितग्रन्थसूची**

1. इडय्काट् नम्पूतिरिः - प्रश्नमार्गः, कृष्णालयं पब्लिकेशन्,पल्लुरुत्ति,1986
2. इडय्काट् नम्पूतिरिः - प्रश्नमार्गः, चौखम्बा सुरभारती प्रकाशन् ,वाराणसी.1999
3. इडय्काट् नम्पूतिरिः - प्रश्नमार्गः,देवी ग्राफिक्स्,कोटुङ्ङल्लूर्, 2011
4. वराहमिहिराचार्यः - होराशास्त्रम्,, चौखम्बा सुरभारती प्रकाशन्, वाराणसी.2014
5. वि पि के पोतुवालः - उत्तरमलायालपञ्चाङ्गम्, ,ज्योतिस्सदनं,पय्यन्नूर्, 2022

# शुक्लयजुर्वेदे भूतकाललकारार्थविचारे उवटमहीधरयोः मतभेदः-कश्चन विचारः।

**डा.रेनिल देव एम्.आर्**

सहायकाचार्यः, व्याकरणविभागः

सर्वकारीयसंस्कृतविद्यालयः, तिरुवनन्तपुरम्

**कुञ्चिकापदानि**

वेदः,उवटः, महीधरः, वाजसनीयसंहिता, छन्दसि, लकारः, भूतकालः

**शोधसारः**

निबन्धेऽस्मिन् शुक्लयजुर्वेदप्रतिपादितानां भूतकाललकाराणामर्थव्यत्ययः प्रदर्शितः। वैदिकभाषायां लकाराणामर्थकथने लौकिकसंस्कृतवन्नियमः नास्ति। चतुर्षुवेदेषु लकाराणाम् अर्थविपरिणामः बहुत्र दृश्यते। तेषु भूतकाललकाराणामर्थव्यत्ययः अत्यधिक एव। सर्वेषां लकाराणामर्थकथने बहुषु स्थलेषु व्यतिरेकः दृश्यते च। शुक्लयजुर्वेदस्य वाजसनीयसंहितायां लकाराणामर्थव्यत्ययः बहुत्र वर्तते। विषयेऽस्मिन् उवटभाष्ये महीधरभाष्ये च मतभेदः दृश्यते। प्रबन्धेऽस्मिन् विभिन्नेषु मन्त्रेषु भूतकाललकाराणां धातूनाञ्च अर्थकथने उव्वटमही-धराभ्यां स्वीकृतानामाशयानां सजात्यवैजात्यानि प्रदर्श्य तयोः अर्थकथने दृश्यमानवैरुध्यानि समानताश्च प्रतिपादिताः।

**उपोद्घातः**

पाणिनिना लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् इति दशलकाराः प्रणीताः। तेषु लट्लकारः वर्तमानकाले, लुङ्, लङ्, लिट् लकाराः भूतकाले, लुट्, लृट् भविष्यत्काले, लिङ्, लोट्, लेट् च विध्यादिरर्थे, आशीरर्थे च प्रयुज्यन्ते। लृङ्लकारः क्रियानिष्पतौ भूतकाले भविष्यत्काले च प्रयुज्यते। लेट् लकारप्रयोगः वैदिके एव दृश्यते। भूतकाललकारेषु लुङ् सामान्यभूते, लङ् अनद्यतनभूते, लिट् परोक्षे च प्रतिपाद्यते। भविष्यत्काललकारेषु लुट् अनद्यतनभविष्यत्काले, लृट् सामान्यभविष्यत्काले च प्रयुज्यते इति सामान्यनियमः। किन्तु वैदिके अस्य नियमस्य व्यतिरेकः। चतुर्षु वेदेषु लकाराणामर्थविपरिणामः बहुत्र दृश्यते। शुक्लयुजुर्वेदे बहुत्र लकाराणामर्थविपरिणामः वर्तते।

शुक्लयजुर्वेदीयवाजसनीयसंहितायाः प्रमुखेद्वेव्याख्यानेस्तः, उवटभाष्यं महीधरभाष्यञ्च। प्रबन्धेऽस्मिन् विभिन्नेषु मन्त्रेषु भूतकाललकाराणां धातूनाञ्च अर्थकथने उवटमहीधराभ्यां स्वीकृतानामाशयानां साजात्यवैजात्यानि प्रदर्श्य तयोः अर्थकथने दृश्यमानवैरुध्यानि समानताश्च प्रतिपादिताः।

लौकिकवैदिकयोः लकारर्थविचारः पाणिन्यादिवैयाकरणैः कृतः। पाणिनिना 'छन्दसि लुङ्लङलिटः'[1], लिङर्थे लेट्[2], उपसंवादाऽऽशङ्कयोश्च, छन्दसिलिट्[3] इत्यादिभिः सूत्रैः अयं विषयः छन्दसि प्रतिपाद्यते। यथा तैत्तिरीयसंहितायाम् 'नारत्यैसुवरभिविख्येषम्' इति[4] मन्त्रप्रयोगः। अत्र विख्येषमिति लुङ्लकारः पश्यामि इति लटर्थे व्याख्यातृभिः निर्णीयते। नराणां स्वामित्वेन सम्बन्धिनं ज्योतिः (द्योतनशीलम् आवहनीयम्) आभिमुख्येन पश्यामि इति मन्त्रार्थः। तद्वत् शुक्लयजुर्वेदे बहुत्र लकाराणामर्थविपरिणामः दृश्यते। लकाराणाम् अर्थविपरिणामेषु मुख्याः भवन्ति भूतकाललकाराः। बहुषु स्थलेषु लङ्लुङ्लिटः इति भूतकाललकाराः अन्येषु अर्थेषु विकल्पेन प्रतिपाद्यन्ते। मुख्यतया लोडर्थे लडर्थे लिङर्थे च। पाणिनिना 'छन्दसि लुङ्लङ्लिटः' इति सूत्रेण अयं विषयः प्रतिपाद्यते।

**लुङ्लकारस्य अर्थभेदः**

वेदेऽस्मिन् लकाराणामर्थव्यत्ययेषु लुङ्लकारस्य अथ विपर्ययः बहुत्र दृश्यते। लुङ्लकारः लौकिके सामान्यभूते प्रयुज्यते। किन्तु वैदिके अयं लकारः सर्वकालेषु दृश्यते। अस्य आधारः 'छन्दसि लुङ्लङ्लिटः', 'व्यत्ययो बहुलम्[5] इति सूत्रद्वयमेव।

**वर्तमानार्थे लुङ्**

वर्तमानार्थे लुङ्लकारस्य उदाहरणं तु - अगात्[1] इति। 'चित्रं देवानामुदगात्' इति मन्त्रप्रयोगः[2]। अत्र अगात् इति लुङ्लकारस्य 'छन्दसि लुङ्लङ्लिटः'[3] इति सूत्रेण काल-

---

[1].अष्टाध्यायी (अ) -3/4/6

[2]. अ- 3/4/7

[3]. अ- 3/1/93

[4].तैत्तिरीयसंहिता - 1/1/4

[5].अ- 3/1/85

विशेषस्य अवचनात् सामान्ये सर्वकालेषु लुङ्लकारः भवति। अत्र गच्छति इति लडर्थे लुङ्प्रयोगः। सूर्यः आश्चर्यं यथा तथा उदयं गच्छति इत्यर्थः।

अपि च लुङ्लकारस्य अर्थकथने उवटमहीधरयोः मतभेदः दृश्यते। यथा अक्रमीत्[4] इति। 'आ अयंगौः पृश्निः अक्रमीत्' इति मन्त्रप्रयोगः। उवटभाष्ये 'आक्रमते' इति वर्तमानार्थे लुङ् प्रवर्तते। एवं चार्थः 'अयं अग्निः सर्वतः आक्रमते' इति। किन्तु महीधरेण 'क्रमणंकृतवान्' इति भूतकालार्थः उक्तः। तथासति अर्थस्तु 'अयं अग्निः सर्वतः क्रमणं कृतवान्' इति। वस्तुतः अत्र लुङ्लकारस्य छन्दसि सर्वकालप्रयोगसाधुत्वात् व्याकरणनियमानुसारं द्वावपि प्रयोगौ साधू।

न केवलं लकाराणां विषये किन्तु धात्वर्थविषयेऽपि अर्थभेदः उवटमहीधरयोः भाष्ययोः वर्तते। यथा 'अख्यत्'[5] इति। अत्र सर्वकालेषु लुङ्[6]। वस्तुतः अयं धातुः आख्या-नार्थकः। किन्तु द्वयोः भाष्ययोः ख्याधातोः मुख्यार्थस्य स्थाने अन्यार्थप्रयोगः कृतः। उवटभाष्ये अख्यत् इत्यस्य पश्यति इत्यर्थः प्रदर्शितः। तथासति अर्थस्तु 'अग्निः दिवं पश्यति' इति। किन्तु महीधरभाष्ये 'अग्निः द्युलोकं प्रकाशयति' इत्यर्थः उल्लिखितः। किन्तु प्रकरणवशात् पश्यति इत्यर्थापेक्षया प्रकाशयति इत्यर्थस्य साधुत्वमिति भाति। वस्तुतः अग्निरित्यर्थे महिषः इति पदं मन्त्रे प्रयुक्तम्। 'महि माहात्म्यं यागकर्तृस्वरूपं सनोति सः महिषः' इति सशब्दः व्याख्यातः। तत्र प्रमाणं च 'अग्निर्वै महिषः स इदं जातो महान्' इति श्रुतिः[7]। तदनुसारेण द्युलोकम् अनुष्ठातृभ्यः विशेषेणप्रकाशयति प्रकाशितवान् च इत्यर्थः। तथा च अत्र प्रकाशयति इत्यर्थः युक्ततरः।

---

[1].इण्गतौ (भ्वा.प) लुङ् प्र.पुए.व।

[2].वाजसनीयसंहिता (वा.सं) - 7/42

[3].अ-3/4/6

[4].क्रमुपादविक्षेपे (भ्वा.प) लुङ् प्र.पुए.व।

[5].ख्याप्रकथने (अ.प) लुङ् प्र.पु.ए.व।

[6].अ - 3/4/6

[7].वा.सं - पृष्टम्-43

**लोडर्थे लुङ्**

लोडर्थे लुङ्लकारप्रयोगस्तु - अगन्महि[1] इति। अत्र गम्लृधातोः 'सङ्गताभवाम' इति लोडर्थे लुङ्प्रयोगः। 'संतनूभिरगन्महि' इति मन्त्रप्रयोगः। वयं शरीरावयवैः सङ्गता भवाम इति मन्त्रार्थः।

**विधिलिङर्थे लुङ्**

विधिलिङर्थे लुङ्लकारप्रयोगस्तु - हिंसिष्टम्[2] इति। अत्र सर्वकालेषु लुङ्[3]। 'ओषध्याः ते मूलं माहिं सिष्टमिति मन्त्रप्रयोगः[4]। महीधरेण मा विनाशयतमिति लिङर्थे लुङ् प्रयुज्यते। उवटेन मा विनाशिष्टमिति भूतकाले प्रयुज्यते। 'मा यज्ञं हिंसिष्टं मा यज्ञ-पतिम्' इति मन्त्रप्रयोगः। हे अग्निदेवते, युवां यज्ञं यजमानं च मा विनाशयतं विनाशिष्टं वा इत्यर्थः। व्याख्यानरीत्या द्वावपि प्रयोगौ साधू।

**आशीरर्थे लुङ्**

आशीरर्थे लुङ्प्रयोगस्तु -भूत्[5] इति। 'इन्द्रः आज्येन हविषाभूत्' इति मन्त्रप्रयोगः[6]। मन्त्रप्रयोगः[6]। उवटेन भूयात् इति लिङर्थे लुङ् इत्यभिप्रैति। महीधरेण भवतु इति लोडर्थे लुङ् इति स्वीकृतः। इन्द्रः अजनेन हवनेन भूयात् भवतु वा इति मन्त्रार्थः। प्रकरणवशात् द्वावपि समीचीनौ।

**लङ्लकारस्य अर्थभेदः**

लङ्लकारः अनद्यतनभूतार्थे लौकिके प्रयुज्यते। अयं लकारः छन्दसि सर्वकालेषु दृश्यते। लुङ्लकारवत् अयं लकारः भूतार्थे वर्तमनार्थे लोडर्थे लिङर्थे च निर्दिश्यते। तेषु लडर्थलोडर्थयोः प्रयोगः अत्यधिकः भवति।

---

[1].गम्लृगतौलुङ् उ.पुब.व

[2].हिसिहिंसायां (रु.प) लुङ् म.पुद्वि.व।

[3].अ - 3/4/6

[4].वा.सं- 5/3

[5].भूसत्तायाम् (भ्वा.प) लुङ् प्र.पुए.व।

[6].वा. सं - 2/9,7/39

 ISSN : 2277-2359

**वर्तमानार्थे लङ्**

वर्तमानार्थे लङ्लकारप्रयोगस्तु - चोदयत्[1] इति। चोदयति प्रेरयति वर्षति वा इति वर्तमानार्थे लङ्प्रयोगः। 'अयं वनेः चोदयत् पृश्निगर्भाज्योतिर्जरायुरजसोविमाने' इति मन्त्र-प्रयोगः। अस्य अर्थस्तु अयं ज्योतिर्जरायुः कान्तचन्द्रः उदकस्य निर्माणकाले द्युलोकस्थापः चोदयति प्रेरयति वर्षति वा इत्यर्थः।

**लोडर्थे लङ्**

लोडर्थे लङ्लकारप्रयोगस्तु युयवन्[2] इति। अत्र 'व्यत्ययो बहुलम्'[3] इति सूत्रेण पृथक्कुर्वन्तु इति लोडर्थे लङ्। 'सनोति अस्मत्युयवन् अमी वाः[4]' इति मन्त्रः। 'ते अश्वाः अस्मत् सकाशात् क्षिप्रं व्याधीन् कुर्वन्तु' इत्यर्थः।

लङ्लकारस्य अर्थकथनेऽपि उवटमहीधरयोः भाष्ययोः मतभेदो वर्तते। यथा - अचरत्[5] इति। सर्वकालेषु लङ्। महीधरभाष्ये चरति इति लटर्थे लङ् प्रयुज्यते। किन्तु उवटभाष्ये भूतकालार्थे प्रयुज्यते। 'जवोयस्तेवाजिन्निहितो गृहाः यः श्येने परीत्तो अचरश्च वाते' इति मन्त्रप्रयोगः। हेवाजिन् अश्व, गुहायां हृदयप्रदेशे स्थापितः तवयः वेगः श्येने वायौ च परिदत्तः सन् चरति अचरत्वा इत्यर्थः। प्रकारणवशात् द्वावपि साधू।

**लिट्लकारस्य अर्थभेदः**

सामान्यतया परोक्षार्थे लिट्लकारः प्रयुज्यते। वैदिके छन्दसि लुङ्लङ्लिटः इति सूत्रेण सर्वकालेषु अयं लकारः निर्दिश्यते। अपि च 'छन्दसि लिट्'[6] इति सूत्रेण सामान्यभूते सामान्यभूते च छन्दसि लिट् विधीयते। अस्मिन्वेदे अयं लकारः लडर्थे सामन्यभूते च दृश्यते।

**लडर्थे लिट्**

---

[1].चुदसंचोदने (चु.प) लङ् प्र.पुए.व।

[2].युपृथक्भावे (अ.प) लङ् प्र.पुब.व।

[3].अ-3/1/85

[4].वा.सं - 9/16

[5].चरगतौ (भ्वा.प) लङ् प्र.पुए.व।

[6].अ. 3/2/105

 ISSN : 2277-2359

लङर्थे लिड्प्रयोगा: ददर्श इति। पश्यामि इत्यर्थ:। अत्र सर्वकालेषु लिट्। 'अहं सूर्यम् उभयत: ददर्श' इति मन्त्रप्रयोग:[1]। अहं सूर्यम् उभयत: पश्यामि इत्यर्थ:।

**लोडर्थे लिट्**

लोडर्थे लिड्प्रयोगस्तु आनञ्ज। अत्र 'व्यत्ययो बहुलमिति' सूत्रेण लोडर्थे लिट्। महीधरव्याख्याने व्यक्तीकरोतु इति लोडर्थे लिट् प्रयुज्यते। 'इन्दुरन्त: महिमानम् आनञ्ज' इति मन्त्रप्रयोग:[2]।अस्य अर्थस्तु 'इन्दु: (सोमसदृश: गर्भ:) महत्वं व्यक्तीकरोतु इति।

**सामान्यभूते लिट्**

सामान्यभूते लिट्प्रयोगस्तु बभूव[3]। अत्र 'छन्दसि लिट्' इति सूत्रेण सामान्यभूते लिट्। उवटभाष्ये भवतीति लटर्थे लिट्प्रयोग:। महीधरव्याख्याने अभूत् इति भूतकलार्थे एव सूच्यते। 'प्रजापते न त्वत् एतानि अन्तो विश्वारूपाणि परिताबभूव[4]' इति मन्त्रप्रयोग:। अस्य अर्थस्तु हे प्रजापते त्वत् अन्यो सर्वाणि रूपाणि परिभवितुं समर्थो च भवति अभूत्वा इति। अत्र प्रकरणवशात् भूतकालापेक्षया वर्तमानकालस्य साधुत्वमिति भाति।

**उपसंहार:**

प्रबन्धेऽस्मिन् विभिन्नेषु मन्त्रेषु भूतकाललकाराणां धातूनां च अर्थकथने उवटभाष्ये महीधरभाष्ये च स्वीकृतानामाशयानां साजात्यवैजात्यानि प्रदर्श्यतयो: अर्थकथने दृश्यमान वैरुध्यानि समानताश्च प्रतिपादिता:। लकाराणामर्थकथने लौकिकसंस्कृते ये नियमा: वर्तन्ते तेषां नियमानां व्यतिरेक: वैदिके बहुषु स्थलेषु वर्तते। स: व्यतिरेक: शुक्लयजुर्वेदेऽपि बहुत्र दृश्यते। लकारविषये भूतकाललकाराणामर्थव्यत्यय: अत्यधिक एव। भूतकाललकाराणां धातो: च अर्थकथने उवटभाष्ये महीधरभाष्ये प्रदर्शित: मतभेद: प्रकरणवशात्साधु: भवति। इमं विषयमधिकृत्य इतोऽपि पठनमनुपेक्षणीयमेव।

**सहायकग्रन्थसूची**

1. ऋग्वेदादिभाष्यभूमिका – महर्षि दयानन्दसरस्वती। सम्पादक: - स्वमीसम्पूर्णानन्दसरस्वती।

---

[1].वा. सं -8/9

[2].वा.सं - 8/30

[3].भूसत्तायां (भ्वा.प) लिट् प्र.पुए.व।

[4].वा. सं - 10/20

2. तैत्तिरीयसंहिता - सायणभाष्यम्, भट्टभास्करव्याख्यनम्, वैदिकसंशोधनमण्डल्, पुने – 1970

3. वाजसनेयमाध्यन्दिन-शुक्लयजुर्वेदसंहिता - उवटमहीधरभाष्यम्, चौखम्बाविद्याभवन्, वाराणसि।

4. वैदिककोशः - प्रो. चन्द्रशेखर उपाध्याय एवं श्री अनिलकुमार् उपाध्याय, नाग्पब्लिकेशन्स्, दिल्ली - 1995.

5. वैयाकरणसिद्धान्तकौमुदी - श्रीभट्टोजिदीक्षितः, सम्पादकः - श्रीबालकृष्ण पञ्चोली, चौखम्बा-संस्कृत-संस्थान्, वाराणसी – 2011

# सुन्दोपसुन्दोपाख्यानम् इति भट्टपादप्रबन्धस्य साहितीयमध्ययनम्

**डा.जस्टिन् पि.जि**

सहायकाचार्यः, संस्कृतविभागः

लिटल् फ्लवर् महाविद्यालयः, गुरुवायूर्

**उपोद्घातः**

संस्कृतसाहित्यस्य विविधशाखासु पश्चाद्वर्तिनी नूतनी च काव्यशाखा भवति चम्पूकाव्यशाखा। क्रिस्तोः पश्चात् सप्तमे शतके आसीत् काव्यादर्शस्य रचना। तत्र 'गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते' इति तल्लक्षणं विदत्तम्।[1] भारतस्य विभिन्नेषु प्रदेशेषु कविभिः चम्पूकाव्यानां परिपोषणम् अकारि। पञ्चदश-षोडश-सप्तदशशतकेषु चम्पूकाव्यानां विकासः क्रमशः इतरकाव्यशाखावत् परिपक्वतां प्राप। चम्पूकाव्यमिति प्रभेदेन आभारतं गद्यपद्यमिश्रितानि काव्यानि संस्कृतसाहित्यस्य पुष्टिम् अकुर्वन्। केरलेषु तु चम्पूकाव्यस्य स्थानं विभिन्नम् आसीत्। दृश्यकलापरम्परायाम् अतिप्रचारं प्राप्तवती काचन कला आसीत् 'चाक्यार्कूत्त् अथवा प्रबन्धंकूत्त्' इति। तस्य कूत्त् कलारूपस्य रंगभाष्यमिति रूपेण आसीत् चम्पूकाव्यानां केरलेषु प्रसिद्धिः। अर्थात् चम्पूकाव्यानां प्रयोजनं तु मञ्जसाफल्यमासीत् केरलेषु। अत एव चम्पूकाव्यानाम् आस्वादने इतरकाव्यापेक्षया सहृदयप्रीतिः अधिका प्रवृत्ता। केरलेषु चम्पूकाव्यानि 'प्रबन्धः' इति नाम्ना अभिधीयते। प्रकर्षः बन्धः इति व्युत्पत्त्या उत्तमं काव्यं इत्यर्थे प्रबन्धशब्दः प्रवर्तते।[2]

त्रयोदशशतकादारभ्य केरलेषु प्रवर्तमानस्य प्रबन्धसाहित्यस्य गतिविधाने नवीनतामकलयत् मेल्पुत्तूर् नारायण भट्टपादः। हास्यरसम् अङ्गीभूय प्रवर्तमानेषु प्रबन्धेषु भक्तिरसस्य स्वाधीनतां समाविशत् भट्टपादः। कथाश्रवणं परनिर्वृतिपरं चेदपि तद्वारा परमपुरुषार्थस्य मोक्षस्य प्राप्तिश्च भविष्यतीति मेल्पुत्तूर् नारायणभट्टपादः प्रमाणीकृतवान्।

---

[1]का.द./१.३१.पृ.सं.२९

[2]क्षेत्रकलासाहित्यं अरङ्ङम् पाठवुम्./पृ.सं.२११

महाभारतकथां रामायणकथां भागवतकथां च स्वांशं कृत्वा भक्तिप्रधानानां अनेकानां प्रबन्धानां रचनामकरोत् कविः। सः न केवलं प्रबन्धकर्ता अपि तु कविः, भक्तः, शास्त्रविद् च आसीत्। अनेन असंख्याः प्रबन्धाः रचिताः सन्ति। तेष्वन्यतमः भवति सुन्दोपसुन्दोपाख्यानम् नाम प्रबन्धः। प्रबन्धस्यास्य समीक्षणमत्र क्रियते।

**सुन्दोपसुन्दोपाख्यानम्**[1]

मेल्पुत्तूर् नारायणभट्टपादेन विरचितासु प्रबन्धकृतिषु लघुकायत्वं भजते सुन्दोपसुन्दोपाख्यानप्रबन्धः। प्रबन्धोऽयम् उपदेशात्मकः युधिष्ठिरनारदसंवादरूपः च भवति। पाञ्चालीस्वयंवरात्पश्चात् पाण्डवानां मध्ये नारीहेतोः कलहः मा भूयात् इति धिया श्रीकृष्णनियुक्तेन नारदेन सुन्दोपसुन्दोपाख्यानम् उपदिश्यते। अमुं वृत्तान्तं महाभारते आदिपर्वणि विदुरागमनराज्यलम्बपर्वणि पञ्चसु अध्यायेषु व्यासः उपवर्णितवान्। भट्टपादस्य इतरप्रबन्धेभ्यः श्लोकवैशिष्ट्यात् अयं प्रबन्धः अतिरिच्यते। अर्थगौरवेण नितरां राराज्यते च।

**सन्दर्भः**

सुन्दोपसुदोपाख्यानम् नारदेन उपदिश्यमानं कथावस्तु भवति। इयं कथा महाभारते आदिपर्वणि विदुरागमनराज्यलम्बपर्वणि विद्यते तत्र अष्टाधिकद्विशततमाध्यायतः(२०८) पञ्चसु अध्यायेषु कथेयम् व्यस्ता।[2] युधिष्ठिरस्य अभिषेकात्पश्चात् सः सानुजः सपत्नीकश्च इन्द्रप्रस्थे ससुखम् उवास। काले तस्मिन् श्रीकृष्णः सदुपदेशैः युधिष्ठिरं अबोधयत्। राजमन्दिरं संप्राप्तः देवर्षिः नारदः नारीवशात् सोदराणां वैरं मा भवेत् इति उपादिशत्। तदर्थं तेन श्राविता कथा एव सुन्दोपसुदोपाख्यानम्। महाभारते १३६ श्लोकैः पञ्चभिः अध्यायैः सुन्दोपसुदोपाख्यानकथा वर्णिता।

**सामान्यपरिचयः**

महाभारताधारितप्रबन्धेषु नारायणभट्टेन विरचितः विख्यातः प्रबन्धः भवति सुन्दोपसुदोपाख्यानप्रबन्धः। महाभारते आदिपर्वणि युधिष्ठिरनारदसंवादः इति नामके

---

[1] Trivandrum Sanskrit Series No. 230,1971

[2] म.भा./भा./पृ.सं.१७५-१७८

अध्याये सुन्दोपसुदोपाख्यानं चतुर्षु अध्यायेषु च विस्तृतम्। तत्रस्था कथा नारायणभट्ट-पादेन १५ पद्यैः ७ गद्यैः च संक्षिप्ता कृता। नाट्यकलापैः नानारसपूरितैः पदप्रयोगैः अलङ्कारसौष्ठवैः च अलङ्कृतोऽयं प्रबन्धः केरलेषु कथाकथनविदुषां चाक्यार्जनानां रसनाग्रे नरीनृत्यते। प्रबन्धोऽयं बहुभिः आचार्यैः प्रकाशनपथं समानीतः इति अस्य वैशिष्ट्यं व्यनक्ति। पुन्नश्शेरी नीलकण्ठशर्मणा प्रकाशितासु साहित्यरत्नावलीसञ्चिकासु पाञ्चाली-स्वयंवरचम्पूकाव्यस्य अनुबन्धत्वेन अयं प्रबन्धः प्रकाशितः दृश्यते।[1] कोच्चाम्बिल्लिमठत्तिल् रामन् नम्प्यार् महोदयेन भारतप्रबन्धेऽपि सुन्दोपसुदोपाख्यानप्रबन्धः समाकलितोऽस्ति। केरलविश्वविद्यालयस्य आचार्येण वि.वि.शर्ममहोदयेनापि अस्य प्रबन्धस्य सम्पादनम् अकारि। १९९८ तमे वर्षे एन्.पी. उण्णीवर्येणाऽपि प्रबन्धमञ्जरी नामके प्रबन्धसंग्रहे प्रबन्धो अयं प्रकाशितः। यद्यपि अस्य प्रबन्धस्य बह्व्यः प्रतिकृतयः उपलब्धाः वर्तन्ते तथापि उण्णी महोदयस्य प्रबन्धमञ्जरीगतः सुन्दोपसुन्दोपाख्यानप्रबन्ध एव अत्र पठनविधेयः क्रियते।

**प्रबन्धसारः**

पाण्डवादीन् सर्वानपि उत्तमे भवने निवेश्य भगवति श्रीकृष्णे ततः गन्तुम् उद्युक्ते धर्मपुत्रः तम् प्रति उपदेशं अयाचत। ब्राह्मणादीन् सर्वात्मना मानय इति मात्रम् उपदिशन् श्रीकृष्णः नारदमहर्षेः आगमनमपि असूचयत्। पश्चात् सन्तापशालिनीं कुन्तीं समाश्वास्य बलभद्रेण सार्धं सः द्वारकामगात्। तदानीं श्रीनारदः नारायणजपेन समं पाण्डवान् द्रष्टुं भूतले समाययौ। देवर्षिः पाण्डवान् इत्थम् अकथयत्-

**वैरप्रियोऽस्मि भवतां तु वधूनिमित्तम् नैवास्तु वैरमिति शासितुमागतोऽहम्।**
**नन्वेकवल्लभतया सहवर्तिनां वः स्निग्धात्मनामपि कदापि भिदा भवित्री[2]॥**

इत्युक्त्वा पुरातनीं सुन्दोपसुन्दयोः कथामश्रावयत्। हिरण्यकशिपुकुलोद्भूतस्य निकुम्भस्य पुत्रौ सुन्दोपसुन्दौ अमरत्वप्राप्तये विन्ध्याचलप्रदेशे निजं मांसमेव होमवस्तु विधाय तपः चक्रतुः। ब्रह्मणः सकाशात् अमरत्वं न प्राप्तम्। किन्तु तत्सकाशादेव निजप्रणयविश्वासात्

[1]JKUOML, Vol. XVI, No.2,KSL.P.479

[2]प्र.म./सुन्दो.प्र./श्लो.सं.५./पृ.सं.९२

 ISSN : 2277-2359

परस्परस्यैव वध्यतां प्राप्यमाणावावामिति वरं स्वीकृतवन्तौ तौ स्वर्लोके भूलोके च सर्वान् संपीड्य कामितम् आप्तवन्तौ।

ततः मुनयः ब्रह्मणः समीपं गत्वा तयोः चेष्टाम् अबोधयन्। ईषदालोच्य ब्रह्मदेवः उवाच- 'एहि विश्वकर्मन्, विश्वमधुरपदार्थानाहृत्य सकलसुराङ्गनातिगामिनीं कामिनीं कामपि कामनीयकसारनिधिमारचयेति'।[1] विश्वस्य उत्तमपदार्थेभ्यः तिलमात्रं सारांशं संगृह्य विश्वकर्मा विश्वमोहनां मदनकारिणीं सुन्दरीम् असृजत्। सा तु किमहं करवाणि इति पृच्छन्ती ब्रह्मदेवं नमस्कृतवती। तदा देवः अब्रवीत्-

**तिलांशमादाय मनोहरेभ्यः कृतासि यत्तेन तिलोत्तमा त्वम्।**
**सुन्दोपसुन्दौ वरदानदृप्तावन्योन्यवैराय विलोभय त्वम्॥**[2]

इति। एवं कथिता सा तदर्थं ततः आगात्। तिलोत्तमायाः सौन्दर्यं देवानपि आकर्षयति स्म। शिवः चतुर्मुखः अभवत्। देवेन्द्रः सहस्राक्षः अभवत्। सा लक्ष्यप्राप्तये भूतलं विवेश। सुन्दोपसुन्दौ तस्याः कान्तिं दृष्ट्वा चञ्चलचित्तौ इव सोन्मादौ तदुपान्तम् आपततुः।

सा तु उभावपि मोहयन्ती तरुच्छायायां क्षणं स्थिता। उभावपि तस्यां मग्नचित्तौ अभवताम्। मधुरसल्लापाय अन्योन्यम् अवसरकल्पनेन कालविलम्बं विचिन्त्य अहमेव इमां गृह्णामीति ताम् आक्षिप्तवन्तौ। गुरुवधूं मा स्पृश, अनुजवधूं मा स्पृश इति कथयन्तौ कोपातिरेकात् परस्परं योद्धुं आरब्धवन्तौ अन्ते भूमौ निपतितवन्तौ च।

**गत्वा तत्र समं देवैर्मानयित्वा तिलोत्तमाम्।**
**प्रतिष्ठाप्य सुरश्रेष्ठान् परमेष्ठी ययौ मुदा॥**[3]

नारदः कथां श्रावयित्वा पाण्डवान् अकथयत्। प्राणप्रियेषु अपि कामिनीनिमित्तं वैरं जायत एव। अतः द्रौपदीविषये उचितः निर्णयः भवद्भिः स्वीकरणीयः इति। नारदमहर्षेः युक्तियुक्तवचांसि श्रुत्वा नारदसमक्षं ते एवं प्रतिज्ञां चक्रुः यत् वयम् एकैकाब्दं अमूं वधूं

---

[1]प्र.म./सुन्दो.प्र./पृ.सं.९२

[2]प्र.म./सुन्दो.प्र./श्लो.सं.८./पृ.सं.९३

[3]प्र.म./सुन्दो.प्र./श्लो.सं.१२./पृ.सं.९४

भजेमहि। नः यः एनया संयुतं पश्येत् सः वत्सरं प्रावासिकः व्रतधरः स्यात् इति। एवं सुन्दोपसुन्दोपाख्यानप्रबन्धस्य सारः विहितः।

**वर्णनापाटवम्**

अत्यल्पेन इतिवृत्तेन अर्थगौरवं सन्निवेश्य अतिमहत्तरम् उपदेशात्मकं प्रबन्धं रचयामास मेल्पुत्तूर् नारायणभट्टपादः। यद्यपि लघुकायत्वं भजते प्रबन्धः तथापि लौकिकविषयेषु नितरां प्राधान्यं ददत् विषय एव प्रबन्धेऽस्मिन् प्रतिपाद्यते इति वैशिष्ट्यम्। कामिनीद्वारा कलहः स्वाभाविकः इति जनसामान्योक्तिरत्र स्मरणीया। अमुमेव आशयं सुन्दोपसुन्दोपाख्यानद्वारा अत्र विश्लेषयति भट्टपादः। इतरप्रबन्धेभ्यः उपदेशपरत्वात् विलक्षणत्वम् अस्य प्रबन्धस्य महत्त्वमिति निरूपकमतम्। विस्तृतस्य संक्षेपणम् अल्पस्य विस्तारणं च रचनायां भट्टपादस्य सामर्थ्यविषयः एव। अत्र आशयगौरवम् अल्पविषयेण प्रतिपादितमिति कवेः रचनासामर्थ्यं व्यनक्ति।

**वैरप्रियोऽस्मि भवतां तु वधूनिमित्तंनैवास्तु वैरमिति शासितुमागतोऽहम्।**
**नन्वेकवल्लभतया सहवर्तिनां वःस्निग्धात्मनामपि कदापि भिदा भवित्री॥**[1]

अत्र वैरप्रियः नारदः एव उपदेशकः। स्त्रीनिमित्तं वैरं मा भवेत् इत्यस्ति उपदेशः। अत्र उपदेशोपदेशकयोर्मध्ये प्रतीयमानः विरोधः कवेः रचनावैचित्र्यं वर्तते। अर्थात् वैरप्रियस्य उक्तिः सामान्येन लोके हेया भवति। किन्तु ऋषित्वात् दैवत्वाच्च नारदः वरेण्य एव। अत्र वैरस्य हेतुं मूलादेव उत्पाटयितुं वैरनाशस्य कथां उद्धृत्यैव वैरप्रियस्य उपदेशः इति आस्वादकेषु चिन्तोद्दीपकत्वं प्रज्वालयति।

**रससमीक्षणम्**

सुन्दोपसुन्दोपाख्यानप्रबन्धस्य प्रधानकथा तु नारदोपदेश एव। युधिष्ठिरमुद्दिश्य नारदस्य उक्तिरेव वर्ण्यविषयः। युधिष्ठिरस्य नायकत्वे सुन्दोपसुन्दयोः प्रतिपादनं अत्र विहितम्। आप्रबन्धं वीररस एव अङ्गिरसः। शृङ्गारादयः अङ्गत्वेन अङ्गिनं सेवन्ते।

---

[1]प्र.म./सुन्दो.प्र./ श्लो.सं.५/पृ.सं.९२

तिलोत्तमाहेतोः सुन्दोपसुन्दयोः परस्परविरोधः जायते। सा मदीयेति धिया उभावपि परस्परं युद्ध्यमानौ अभवताम्। उदाहरणार्थं -

**स्वां स्वामाशु गदां समीपनिहितामादाय साङ्ग्रामिकीं**

**घोराघातपरौ मुहुः सुरवधूवक्त्राब्जदत्तेक्षणौ।**

**सद्यश्चूर्णितमस्तकस्रवदसृग्व्याजेन रागच्छटां**

**मुञ्चन्तौ निपताम्बभूवतुरुभौ सुन्दोपसुन्दौ क्षणात्॥**[1]

अत्र वीररसः प्रतिबिम्बितः।

**अलङ्कारसमीक्षणम्**

मेल्पुत्तूर् नारायणभट्टपादः गद्ये वा पद्ये विनालङ्कारं रचनां नैव कृतवानिति तस्य कृतिभ्यः अवगन्तुं शक्यते।

**किमहं करवाणि वाणिनाथेत्यवनम्रामवलोक्य तां ज्वलन्तीम्।**

**द्रुहिणो मुदितो दिदेश तस्यै भुवनाकर्षणशक्तिमद्वितीयाम्॥**[2]

अत्र ककार-वकार-णकारादीनां सकृदावृत्तिः प्रथमपादे, दकारस्य असकृदावृत्तिः तृतीयपादे च दृश्यते। अतः श्लोकेऽस्मिन् अनुप्रास एव अलङ्कारः। एवं शब्दालङ्कारस्य सौष्ठवम् इतरत्र च द्रष्टुं शक्यते। 'तं च स्फटिकघटितमिव मुक्तात्मकमिव सत्त्वोच्चयमिव प्रसादमयमिव प्रसन्नमुरारिहसितच्छायानिवीतमिव समीपमुपसरन्तमभिवन्द्य परमासने निवेश्य तद्वचनश्रवणकुतुकिषु निषण्णेषु पाण्डवेषु सस्मितमसाववादीत्'।[3] इत्यत्र उपमालङ्कारः।

**छन्दस्समीक्षणम्**

प्रबन्धेऽस्मिन् नारदः सुन्दोपसुन्दयोः कथां विवृणोति। तयोः वाग्वादः परस्परयुद्धं च अत्र वर्ण्यते। अतः वीररसानुयायी छन्दोविशेष एव भट्टपादेन प्रयुक्तः। अतः शार्दूलविक्रीडितं नाम छन्दसः उल्लासः प्रबन्धस्य आस्वाद्यतां पोषयति। यथा-

---

[1]प्र.म./ सुन्दो.प्र./ श्लो.सं ११/ पृ.सं. ९४

[2]प्र.म./ सुन्दो.प्र. /श्लो.सं७/ पृ.सं.९३

[3]प्र.म./ सुन्दो.प्र./पृ.सं.९२

**स्वां स्वामाशु गदां समीपनिहितामादाय साङ्ग्रामिकीं**
**घोराघातपरौ मुहुः सुरवधूवक्त्राब्जदत्तेक्षणौ।**
**सद्यश्चूर्णितमस्तकस्रवदसृग्व्याजेन रागच्छटां**
**मुञ्चन्तौ निपताम्बभूवतुरुभौ सुन्दोपसुन्दौ क्षणात्॥**[1]

अत्र शार्दूलविक्रीडितं नाम छन्दः एव।

**सङ्घटनासमीक्षणम्**

औचित्यं रसहेतुरिति प्रघोषकेषु कविपुङ्गवेषु अन्यतमः भवति मेल्पुत्तूर् नारायण-भट्टपादः। अत्र तस्य कृतिषु रचनायाः सर्वमुखौचित्यं द्रष्टुं शक्यते। रसानुकूलतया पदं प्रयोक्तुं या शक्तिः भट्टपादे विद्यते तां सङ्घटनानिरूपणे स्पष्टतया अवगन्तुं शक्यते। पद-वाक्य-प्रबन्धवकतां रसं प्रति उत्कर्षकारणानि कारयति कविः प्रबन्धेऽस्मिन्। समास-असमास- दीर्घसमासादीनाम् औचित्येन प्रयोगः च नितरां प्रशंसनार्ह एव।

अल्पसमासस्य यथा -

**वैरप्रियोऽस्मि भवतां तु वधूनिमित्तं। नैवास्तु वैरमिति शासितुमागतोऽहम्।**
**नन्वेकवल्लभतया सहवर्तिनां वःस्निग्धात्मनामपि कदापि भिदा भवित्री॥**[2]

अत्र वैरप्रियः इति अल्पसमासः। एकवल्लभतया इत्यत्रापि अल्पसमास एव। एतादृश-प्रयोगाः आस्वादकेषु अनन्दातिरेकम् उत्पादयन्ति।

दीर्घसमासो यथा -

**स्वां स्वामाशु गदां समीपनिहितामादाय साङ्ग्रामिकीं**
**घोराघातपरौ मुहुः सुरवधूवक्त्राब्जदत्तेक्षणौ।**
**सद्यश्चूर्णितमस्तकस्रवदसृग्व्याजेन रागच्छटां**
**मुञ्चन्तौ निपताम्बभूवतुरुभौ सुन्दोपसुन्दौ क्षणात्॥**[3]

अत्र 'सद्यश्चूर्णितमस्तकस्रवदसृग्व्याजेन' इत्यत्र दीर्घसमासः।

---

[1]प्र.म./ सुन्दो.प्र./ श्लो.सं ११/ पृ.सं. ९४

[2]प्र.म./ सुन्दो.प्र./श्लो.सं.५/पृ.सं.९२

[3]प्र.म./सुन्दो.प्र./११/९४ पृ.सं

**संक्षेपः**

अत्र सुन्दोपसुन्दोपाख्यानस्य साहित्यदृष्ट्या रस-अलङ्कार-सङ्घटनादीनां दिङ्मात्र-परिशीलनं अत्र विहितम्।भट्टपादस्य बहुमुखपाटवम् अनितरसाधारणकवितानैपुण्यं च अनुवाचकैः अवगन्तुं मया प्रयासः कृतः। काव्यविभागेषु सामर्थ्येण स्वातन्त्र्येण च भट्टपादसमं प्रवृत्तः अन्यः कविः केरलेषु नास्तीति वक्तुं शक्यते। तस्य मुक्तकेभ्यः प्रौढान् प्रबन्धान् यावत् विद्यमानानां कृतीनां अवलोकनात् इदं तथ्यम् अवगम्यते। सामाजिकान् नन्दयितुं योग्याः समे गुणाः भट्टपादप्रबन्धेषु सन्तीति चाक्यार् जनैः कृतानां प्रबन्धानां प्रेक्षकाः ऐकमत्येन अभिप्रयन्ति।

**सहायकग्रन्थसूची।**

1. प्रबन्धमञ्जरी – डा. एन्. पि. उण्णी, राष्ट्रियसंस्कृतसंस्थानम्, नवदिल्ली, १९९८.
2. महाभारतम् – व्याख्याकारः – नीलकण्ठः, नाग पब्लिकेशन्, दिल्ली, १९८८
3. नारायणीयसुधा – सम्पादकः – पि.सि. मुरलीमाधवन्, रा.सं.सं.मा.वि.गुरुवायूर् परिसरः, केरलम्, २०१६
4. काव्यादर्शः – दण्डी, विद्याभवन् संस्कृतसीरीस्, वाराणसी १९७२
5. भारतम् प्रबन्धम्, कोच्चाम्बिल्लि मठत्तिल् रामन् नम्ब्यार्, भारतविलासं प्रेस् तृश्शूर् १९३१

 ISSN : 2277-2359

# वृष्टौ वाराहीविचिन्तनम्

**डा. ईश्वरन् ई.एन्**

सहायकाचार्यः, ज्योतिषविभागः

सर्वकारीयसंस्कृतविद्यालयः, त्रिपुणित्तुरा

तत्रभगवान् वराहमिहिरः वृष्टिः कदा भविष्यति इति विषये नानाविधानि लक्षणानि अवलम्ब्यैव अवहितचित्तो दैववित् उत्तरं वदेत् इति निर्दिशति। अपि च तादृशस्य वाक् मुनिवाणीव भवति कदापि मिथ्या न भवतीति प्रतिज्ञां करोति। यथा-

"दैवविदवहितचित्तो द्युनिशं यो गर्भलक्षणे भवति।
तस्य मुनिरिव वाणी न भवति मिथ्याम्बुनिर्देशे॥"[1]

**मेघगर्भलक्षणम्**

स्वतः मेघाः शुद्धशुक्लस्निग्धाः भवन्ति। तत्र मेघे जलांशाः वर्धन्ते चेत् तेषां भारं वर्धते वर्णभेदः सञ्जायते च। अस्यैव मेघगर्भः इति नाम।

सूर्यतापः जलाशयान् तापयति। एवं तप्तजलतन्मात्राणां गतिवर्धनं भवति। तन्मात्राणां मध्ये दूरं वर्धते च। एवं भाररहिता जलतन्मात्रा वायुतन्मात्रां प्रविशति। एतस्य नाम बाष्पीकरणमिति।[2]शीतीकरणानुसारं वायुः जलबाष्पं स्वीकरोति। कस्याञ्चित् निश्चिततापव्यवस्थायाम् सान्द्रीभूय[3] बाष्पबिन्दवः भवन्ति इत्युक्ते जलबाष्पम् अन्तरिक्षे घनीभवति इत्यतः तस्य चलनवेगः न्यूनः भवति। तदा ते समीपं समीपमागत्य वायौ विद्यमानलवणस्य रजःसंहतीनां च समन्तात् आवरणं कुर्वन्ति। ते मिलित्वा मेघाः भवन्ति। एवं बाष्पीकरण - सन्द्रीकरणादिप्रक्रिया वस्तुतः मेघगर्भः इति वक्तुं शक्यते। एतदेव कालिदासः वदति स्म "गर्भं दधत्यर्कमरीचयोऽस्मात्[4]" इति।

गर्भारम्भस्तु मार्गशीर्षमासस्य प्रतिपदादितः भवेत्। अथवा चन्द्रे मार्गशीर्षे आषाढ-

[1] बृ.सं 21/3

[2]प.का. – पु/21-23

[3] ऋ का –पु 48

[4]र. व. 13/4

नक्षत्रे यदा भवति तदा च भवेत् इति गर्गादीनामाचार्याणां मतम् वराहमिहिरसम्मतञ्च। केचित्तु कार्त्तिकशुक्लान्तमतीत्यैव गर्भारम्भः इति इत्युक्ते पञ्चदशदिनानि पृष्ठत एव आरम्भः इति भावः। एतत्तु बहूनाम् सम्मतं न। कार्तिकमासस्तु अक्टोबर - नवम्बर-मासयोः मध्ये, मार्गशीर्षस्तु नवम्बर - डिसम्बर मासयोः मध्ये इति भेदः।[1] मेघानां गर्भकालः 195 दिवसाः भवन्ति इत्युच्यते -

"यन्नक्षत्रमुपगते गर्भश्चन्द्रे भवेत् स चन्द्रवशात्।
पञ्चनवते दिनशते तत्रैव प्रसवमायाति॥"[2] इति।

यन्नक्षत्रमुपगते चन्द्रे गर्भः सम्भूतः तस्मात् पञ्चनवतिदिनशते अतीते तन्नक्षत्रस्थिते चन्द्रे प्रसवमायाति। अत्र 195 सावनदिनानि गतानि स्युः। तदा एव गर्भधारणनक्षत्रं प्रसवकाले लभ्यते इति भट्टोत्पलः[3]। अत एव समाससंहितायामुक्तम् स्पष्टतरम् -

"पौषासितपक्षाद्यैः श्रावणशुक्लादयो विनिर्देश्याः।
सार्धैः षड्भिर्मासैर्गर्भविपाकः स नक्षत्रे॥" इति।

मेघप्रसवः कस्मिन् काले कस्मिन् समये इति आचार्येणोक्तं भवति।शुक्लपक्षे मेघगर्भश्चेत् प्रसवः कृष्णपक्षे भवति। कृष्णपक्षे मेघगर्भः तर्हि प्रसवः शुक्लपक्षे च भवति। तथा रात्रौ गर्भश्चेत् दिने प्रसवः दिवा चेत् रात्रौ च। उदयसन्ध्यायां मेघगर्भे सायं सन्ध्यायां प्रसूतिः अन्यथा तद्विपरीतं चेति बोध्यम्। उक्तं यथा -

"सितपक्षभवा कृष्णे शुक्ले कृष्णा द्युसम्भवा रात्रौ।
नक्तंप्रभवाश्चाहनि सन्ध्याजाताश्च सन्ध्यायाम्॥"[4] इति।

ये मेघाः गर्भकाले पूर्वस्यां दिशि समुद्भूताः प्रसवकाले ते पश्चिमदिशि सम्भवन्ति। पश्चिमस्यां समुद्भूताः प्रवर्षणे पूर्वस्यां दिशि सम्भवन्ति। गर्भे उत्तरस्यां चेत् प्रसवे दक्षिणायाम्, दक्षिणायाम् चेत् उत्तरस्याम्। गर्भे आग्नेय्यां प्रसवे वायव्याम् वायव्यसम्भूता

[1] बृ.सं – 21/5,6

[2] तत्रैव – 21/7

[3] बृ.सं. भ.वि. पु-521

[4] बृ.सं. 21/8

ISSN : 2277-2359

आग्नेय्याम् च। ईशानदिशि सम्भूता नैरृत्याम् प्रसवे भवति। नैरृत्यां गर्भे चेत् प्रसवे ईशानदिशि च भवन्ति मेघाः। एवं विपरीतदिक्षु एव वायोः स्थितिरपि ग्राह्या।[1]

| मेघगर्भकालः | मेघप्रसवकालः[2] |
|---|---|
| पौषकृष्णपक्षः | श्रावणशुक्लपक्षः |
| माघशुक्लपक्षः | श्रावणकृष्णपक्षः। |
| माघकृष्णपक्षः | भाद्रपदशुक्लपक्षः |
| फाल्गुनशुक्लपक्षः | भाद्रपदकृष्णपक्षः। |
| फाल्गुनकृष्णपक्षः | कार्त्तिकशुक्लपक्षः |

इति मार्गशीर्षाद्याः मेघगर्भाः मन्दफलाः इत्यतः प्रसवकालः नोक्तः अनुमातव्यः च। तथा पौषशुक्लजाताश्च गर्भाः अपि।

गर्भसम्भवकालीनशुभाशुभलक्षणविषये अत्र चिन्त्यते। तत्राद्यम् शुभलक्षणानि कानीत्याह[3] -

1. पूर्वस्याम् ऐशान्याम् उत्तरस्यां च सम्भूताः मरुतः आकाशं निर्मलम् आनन्दकरं मृदु च कुर्वन्तः गर्भाणां पुष्टिकराः भवन्ति।
2. सूर्यचन्द्रौ स्निग्धशुक्लबहुलपरिवेषेण परिवृतौ चेत् तदापि गर्भपुष्टिः भवति।
3. आकाशं विशालं बहुलम् स्निग्धं च मेघयुक्तं सूच्याकारमेघेन क्षुराकारमेघेन लोहित-वर्णमेघेन वा व्यापृतम् काकाण्डमिव कृष्णवर्णसहितं मेचकाभं निर्मलचन्द्रनक्षत्रादियुतं च यदा भवति तदा गर्भाणां पुष्टिः भवति।

---

[1]तत्रैव 21/13

[2] तत्रैव 21/9-13

[3]तत्रैव 21/14-18

4. इन्द्रचाप - मधुरमेघघोष - इन्द्रायुध - प्रतिसूर्ययुक्ता पूर्वापरा सन्ध्या, तदा पक्षिमृग-समूहाः ईशानोत्तरपूर्वदिगस्थाः शान्तशब्दान् कुर्वन्तश्च भवन्ति तदा गर्भपुष्टिः भवति।
5. यदा ग्रहाः स्निग्धरश्मयः विशालमण्डलाकृतयः नक्षत्राणाम् उत्तरेण मार्गेण चरन्तः निरुपद्रवाश्च भवन्ति तदा गर्भपुष्टिः भवति।
6. यदा वृक्षाः निर्बाधाङ्कुराः मनुष्याः मृगाश्च तुष्टाश्चेत् तदा गर्भपुष्टिः भवति।
7. मिलित्वा सम्भवन्ति एतान्युपर्युक्तानि लक्षणनि सर्वाणि वा कानिचिद्वा तदापि मेघगर्भपुष्टिः निश्चयेन वाच्येति भावः। एते गुणाः सर्वेषामेव गर्भाणां पुष्टिकराः मार्गशिरः सितपक्षपक्षतितः वैशाखान्तं यावत् लक्षणीयाश्च सन्ति।

"पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः।
नात्यर्थंमृगशीर्षेशीतंपौषेऽतिहिमपातः॥
माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ।
अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ॥
फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसम्प्लवा स्निग्धाः।
परिवेषश्चासकलाः कपिलस्ताम्रो रविश्च शुभः॥
पवनघनवृष्टियुक्ताश्चैत्रे गर्भाश्शुभाः सपरिवेषाः।
घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे॥""

इति ऋतुस्वभावजनितशुभलक्षणान्याहाचार्यवराहमिहिरः।[1] सङ्गृह्यायमाशयः यत्

मार्गशीर्षे - मेघाः सन्ध्यारागरञ्जिताः परिवेषसहिताश्च भवन्ति।अतिशीतत्वम् च मार्गशीर्षे भवति। (नातिलघुशीतत्वम् इतिभट्टोत्पलः।)

पौषे - मेघाः सन्ध्ययोः रक्तत्वं प्राप्ताः सपरिवेषाश्च भवन्ति। अतिहिमपातोऽत्र विशेषतया भवति। अत्र तु पुलियूर्महाशयः अतिशीतातिहिमपातात् मेघगर्भो नपुष्टिकरः इति व्याख्यानं[2] करोति। तत्तु सत्यम्। यतः "मार्गशीषाद्याः गर्भाः मन्दफलाः पौषशुक्लजाताश्च"

---

[1] तत्रैव 21/19-22

[2] बृ.सं.र.प्र – पु. 132

[1] इति आचार्येणैव पूर्वोक्तत्वात्। अतोऽत्र भट्टोत्पलादिमतंचिन्त्यम्।

माघे- चण्डवातः सूर्यचन्द्रयोः तुषारकलुषद्युती अतिशीतत्वञ्च भवन्ति। घैस्सह आदित्यस्य उदयास्तौ भवतः।

फाल्गुने - परुषः अतिवेगः वातः मेघोद्गमाः स्निग्धाः अखण्डाश्च परिवेषाः कपिलवर्णः ताम्रवर्णो वा सूर्यश्च भवन्ति।

चैत्रे - पवनमेघवर्षणयुक्ताः परिवेषसहिताः शुभगर्भाः।

वैशाखे - मेघैः वायुना विद्युता गर्जितेन युक्ताः शुभगर्भाः भवन्ति। कालस्य उपर्युक्तवत् सहजस्वभावे मेघगर्भाः

पुष्टिकराः भवन्ति। विपरीते तु मेघगर्भहानिश्च।

तथा गर्भकाले मुक्ताफलरजतयो: समाभा इत्युक्ते अतिशुक्लाः अथवा अतिकृष्णाः झषकूर्मादिजलसत्वाकारयुक्ताश्च मेघाः भवन्ति चेत् प्रभूतं जलवर्षणं कुर्वन्ति। उग्रसूर्य-रश्मितप्ताः मन्दमारुतस्पृष्टाश्च मेघाः रुषिता इव महावृष्टिं कुर्वन्ति।

उल्का अशनिः पांसुपातः दिग्दाहः भूकम्पः गन्धर्वनगरं कीलकं केतुः ग्रहयुद्धम् निर्घातं रुधिरादिवर्षणविकारः परिघः इन्दचापः राहुदर्शनम् नाम ग्रहणदर्शनम् इत्यादयः उत्पाताः मेघगर्भानां हानिकराः भवन्ति। उक्तञ्च पाराशरेण ""तेषां ग्रहाणामुदयास्तमयो-ल्कानिर्घाताशनिपातगन्धर्वनगरदिग्दाहार्क रश्मिवर्णविकार-भूचलनप्रादुर्भवो वर्षास्त्ववर्षाय [2] इति।

नक्षत्रवशात् गर्भपुष्टिज्ञानमुच्यते।[3] सर्व-ऋतुषु रोहिणी पूर्वाषाढा उत्तराषाढा पूर्वप्रोष्ठपदा उत्तरप्रोष्ठपदा इति पञ्चसु तारासु विवृद्धः मेघगर्भः प्रसवकाले बहुवर्षणं करोति। उक्तञ्च –

"भाद्रपदद्वयविश्वाम्बुदैवपैतामहेष्वथत्रषेषु।
सर्वेष्वृतुषु विवृद्धोगर्भो बहुतोयदो भवति॥ इति। अपि च-

---

[1] बृ.सं. 21/9

[2] बृ.सं. भ.वि पु- 430

[3] बृ.सं -21/28,29

"शतभिषगाश्लेषाद्रा स्वातिमघासंयुतश्शुभो गर्भः।
पुष्णाति बहून् दिवसान् हन्त्युत्पातैर्हतस्त्रिविधैः॥" इति।

यदि दिव्यान्तरीक्षभौमाद्यैः त्रिविधोत्पातैः न हतः तर्हि सर्वासु ऋतुषु शततारा आश्लेषा आद्रा स्वाती मघा इति पञ्चसु तारासु भूतः मेघगर्भः बहून् दिवसान् पुष्टिं प्राप्य काले बहुवर्षणं करोति। त्रिविधैरुत्पातैर्हतश्चेत् गर्भहानिः ज्ञातव्या इति भावः। एषु योगेषु सत्सु कतिदिनानि वृष्टिः भविष्यति इति योगैःसहोच्यते मृगमासादिष्वष्टौ इत्यादि। यथा -

"मृगमासादिष्वष्टौ षट् षोडश विंशतिश्चतुर्युक्ता।
विंशतिरथ दिवसत्रयमेकतमर्क्षेण पञ्चभ्यः।"[1] इति।

| *नक्षत्राणि* | *मासाः* | *दिनानि* |
|---|---|---|
| आर्द्रा<br>आश्लेषा<br>मघा<br>स्वाती<br>शततारा | मार्गशीर्षः | 8 |
| | पौषः | 6 |
| | माघः | 16 |
| | फाल्गुनः | 24 |
| | चैत्रः | 20 |
| | वैशाखः | 3 |

गर्भनक्षत्रे पापग्रहसंयुक्ते उपल - विद्युत् - मीनादिवर्षणम् फलम्। तत्र रविचन्द्रयो - रन्यतमे स्थिते शुभग्रहवीक्षितयुते च भूरिवृष्टिः वक्तव्या।[2]

वृष्टिरपि वृष्टिनाशनाय भवतीत्याह -

"गर्भसमयेतिवृष्टिर्गर्भाभावाय निर्निमित्तकृता।
द्रोणाष्टांशेऽभ्यधिके वृष्टे गर्भश्रुतो भवति॥"[3] इति।

[1] तत्रैव 21/30

[2] तत्रैव 21/31

[3] तत्रैव 21/32

 ISSN : 2277-2359

मेघगर्भकाले विनाकारणं बहुवृष्टिर्भवति तर्हि गर्भहानिः भवति। दोणस्य अष्टसु एकांशादधिके वर्षणे गर्भस्रावः भवति। अत्र द्रोणो नाम पलशतद्वयम् अतः अष्टांशः इत्युक्ते पञ्चविंशतिपलमिति यावत्।

गर्भे पुष्टे प्रसवकाले ग्रहोपघातादिभिः वर्षणं नाभवत् तर्हि कारकामिश्रवर्षणमेवाग्रे भवति। गां पयः न दोग्धि तर्हि यथा कठिनतां प्राप्नोति तथा वृष्ट्यभावे मेघगर्भान्तर्गतजलं काठिन्यं प्राप्नोतीति।[1]

पञ्चनिमित्तयुक्तः मेघगर्भः बहुवर्षदो भवति। वायुः जलम् विद्युत् मेघघोषः मेघं च पञ्च निमित्तानि भवन्ति। गर्भे एव जलवर्षणं सञ्जातं चेत् शीकराम्भः एव प्रसवकाले भवति।[2] पञ्चनिमित्तयुतगर्भस्य विस्तृतिः शतयोजना भवति। एकैकाभावे अद्र्धार्धमिति कृत्वा व्यापनत्वं ज्ञातव्यम्।[3] इत्युक्ते - निमित्तपञ्चकम् शतम् योजना। निमित्तचतुष्टयं पञ्चाशत् निमित्तत्रयम् पञ्चविंशतिः। निमित्तद्वयम् साद्र्धद्वादश। एकमात्रनिमित्तम् सपादषट् (पञ्च)। कियन्मात्रा वृष्टिः इति प्रमाणम् प्रदर्शयति -

"द्रोणः पञ्चनिमित्ते गर्भे त्रीण्याढकानि पवनेन।
षड्विद्युता नवाभ्रैः स्तनितेन द्वादश प्रसवे॥"[4] इति –

| निमित्तानि | वर्षप्रमाणानि |
|---|---|
| पवनः विद्युत् स्तनितं मेघः जलम् | एकः द्रोणः |
| विद्युत् स्तनितं मेघः जलम् | त्रीणि आढकानि |
| स्तनितं मेघः जलम् | षट् आढकानि |
| मेघः जलम् | द्वादश आढकानि |

[1] तत्रैव 21/33,34

[2] तत्रैव 21/37

[3] तत्रैव 21/35

[4] तत्रैव 21/36

| | |
|---|---|
| जलम् | नव आढकानि |

अत्र अस्माभिः ज्ञातव्यमस्ति यत् गर्गपराहारकाश्यपादीनां काले एव वर्षमापन-सम्प्रदायः आसीदिति। तदर्थं वर्षमापकमपि तैः कृतमासीदिति। तादृशे उन्नते स्थाने आसन् अस्मत्पूर्वजाः।

**सहायकग्रन्थाः**

1.बृहत्संहिता - डॉ. सुरकान्त झा - चौखम्बा संस्कृत सीरीज आफिस, वाराणसी – 2008
2.बृहत्संहिता, भट्टोत्पलविवृतिः - चौखम्बा संस्कृत संस्थान, वाराणसी
3.बृहत्संहिता, रत्नप्रभा – पुलियूर् पुरुषोत्तमन् नम्पूतिरि – देवी बुक् स्टाल्, कोटुंगल्लूर् - 1998
4.रघुवंशमहाकाव्यम् - हिन्दी व्यख्याकार-पं लक्ष्मीप्रपन्नाचार्य: -कृष्णदास अ. -वाराणसी-1983.

# रसेन एधते चित्तचमत्कृतिः

**डा.सोमनाथसेनापतिः**
**अतिथ्यध्यापकः(सहायकाचार्यपदसमानः)**
**साहित्यविभागः,के.सं.वि,गुरुवायूर् परिसरः**

**महत्त्वपूर्णांशः -**

**"नृणां विधौ निषेधे च शिक्षा काव्यप्रयोजनम्।**
**शिक्षा च सचमत्कारं चोदिता स्थिरतां भजेत्॥"**[1]

संसारेऽस्मिन् सर्वत्र सर्वासु भाषासु सर्वैः मानवैः नित्यव्यवहारे चमत्कारशब्दः प्रयुज्यते। अयमेव चमत्कारशब्दः संस्कृतवाङ्मये अलङ्कारशास्त्रे च आलङ्कारिकानां प्रधानविचार्यविषयरूपेण प्रतीयते। तेषु तेषु आलङ्कारिकेषु आलङ्कारिकेण कविराजेन विश्वनाथेन तदीये साहित्यदर्पणग्रन्थे **"रसे सारः चमत्कारः"**[2] इत्युक्तमस्ति। किं तन्मतम् अङ्गीकुर्मः वा, यदि अङ्गीक्रियते तर्हि किं नाम चमत्कारः, कतिविधश्चमत्कारः, कति च चमत्कारकारणं कुतश्च चित्तचमत्कृतिः इति जिज्ञासा। यतो हि रसेन चित्तचमत्कृतिः एधते, अतः रसानां विषये सर्वादौ आलोच्यते। तद्यथा -

**"श्रृङ्गारहास्यकरुणा- - - -रसाः स्मृताः॥"** [3]इति श्लोकेन अवगम्यते यत् श्रृङ्गार-हास्य-करुणादिषु अष्टरसेषु कस्य रसस्य सारः चमत्कारः भवतीति?किं तर्हि श्रृङ्गाररसस्य सारः चमत्कारो वा उत हास्यरसादीनां वा इति।

**शोधसारः -**

यतो हि काव्ये परम्परायाम् अलङ्कारः, गुणः, रीतिः, रसः, ध्वनिः, औचित्यः, वक्रोक्तिश्च प्रमुखसिद्धान्तः आगतः। तर्हि कुत एव रसस्यैव सारः चमत्कारः न तु अलङ्कारादीनाम् इति जिज्ञासा।

एवं सति यदि चमत्कारौ शब्दार्थौ काव्यमिति काव्यलक्षणं क्रियते तर्हि काव्यलक्षणं भवितुमर्हति न वा इति तृतीयप्रश्नः। एतादृशीनां कल्पितप्रश्नानां समाधानं तथा चमत्कारस्य इतिहासान्वेषणं हि अस्य समीक्षणस्य उद्देश्यम्।

**समीक्षणम् –**

चमत्करोतीति चमत्कारः। कविचन्द्रविश्वेश्वरमहोदयेन कथ्यते यत्"**चमत्कारस्तु विदुषामानन्दपरिवाहकृतीति।**"[4]नाम विदुषाम् आनन्दपरिवाह हि चमत्कारः।

समीक्षावसरे यदि वयं अलङ्कारशास्त्रस्य आदितः चिन्तयामः तर्हि सर्वादौ आयाति मुनिर्भरतः प्रायः ख्रीष्टपूर्व द्वितीयशतके। एष महाशयः तदीये नाट्यशास्त्रे रसविषये आलोचितवान्, परं रसस्य सारः हि चमत्कारः इति कुत्रापि न उक्तवान्। ततः परं ख्रीष्टाब्दीय षष्ठशतके आगतः भामहाचार्यः। आलंकारिकोऽयं प्राकप्रथमं "**शब्दार्थौ सहितौ काव्यम्**"[5] इति काव्यलक्षणं कृतवान्, चमत्कारविषये सुष्पष्टतया किमपि न उक्तवान्। काव्यालङ्कारग्रन्थे "**अतिशेते ह्यलङ्कारमन्यं व्यञ्जनचारुता**"[6] इति भामहवचनं प्राप्यते। भामहपरं आचार्यः दण्डी, वामनः, रुद्रटः एते सर्वे गुणालङ्काररीतिनां विषये विशदीचर्चां कृतवन्तः परं चमत्कारविषये स्पष्टतया किमपि न उक्तवन्तः। ख्रीष्टाब्दीय नवमशतके राजानकेन आनन्दवर्धनेन यथा प्रथमतया ध्वनिसिद्धान्तं प्रतिपादितवान् तथैव चमत्कारशब्दः प्रथमतया प्रायोजि तद्यथा-

"**इति काव्यार्थविवेको योऽयं - - - - न विस्मार्यः॥**"[7] इति

अस्य श्लोकस्य अयमेव तात्पर्यं यत्, यस्तु चमत्कृतिविधायी चमत्कारकः सैव काव्यार्थस्य विचारः ध्वनिकारः कथयति। अनेन वक्तुं शक्यते चमत्कारः काव्ये भव्तयेव। स तु ध्वनिमार्गेण भवतु रसमार्गेण भवतु वा इति।

आनन्दवर्धनाचार्यस्य परम् आचार्येण कुन्तकेन तदीये वक्रोक्तिजीवितग्रन्थे चमत्कारशब्दः सन्निवेशितः। तद्यथा-

"**लोकोत्तरचमत्कारकारि - - - - कोऽप्यपूर्वो विधीयते॥**"[8] **इति**

अस्मात् श्लोकात् अलौकिकचमत्कारवैचित्र्यसिद्धये अपूर्वकाव्यविषयकालङ्कारग्रन्थस्य निर्माणं क्रियते। अतः वक्तुं शक्यते यत् कुन्तकस्य अपि चमत्कारसिद्धान्तः अतिप्रियः इति। कुन्तकोपरान्तेन आचार्येण क्षेमेन्द्रेण तदीये कविकण्ठाभरणग्रन्थे चमत्कारविषये विशदी चर्चा कृतास्ति। तद् वयमत्र पश्यामः –

चर्चाप्रसङ्गे क्षेमेन्द्रेण उच्यते "**सुकविरतिशयार्थी - - - मास्वादलोलः॥**"[9]इति पद्यम्। अर्थात् यथा मधुमासेसद्यविकसितानां विशेषकुसुमानां सौरभास्वादानायप्रमत्ताः अलयः वनात् उद्यानकुसुमान् प्रति धावन्ति, तथैव काव्यसौन्दर्यनिर्माणाय कवयः नवीनमार्गम् अनुसरन्ति।एवञ्च तेनोच्यते यत् काव्यचमत्कारत्वनिर्माणे व्यर्थाः कवयः कवित्वं प्राप्तं नैव शक्नुवन्ति–"**नहि चमत्कारविरहितस्य कवेः कवित्वं, काव्यस्य वा काव्यत्वम्।एकेन केनचिदनर्घमणिप्रभेण- - - -यौवनमङ्गनानाम्॥**"[10]इति

अर्थात् श्लोकस्यास्य अयमेवाभिप्रायः यत्, यदि तरुण्याः तारुण्यं सौन्दर्यरहितं भवति चेत्, निर्दोषत्वे सति पुरुषचित्तम् आकर्षयितुं नैव शक्नोति। तथैव सुन्दरवर्णयुक्तं निर्दोषकाव्यं चमत्कारशब्दरहिते सति कस्यापि मनसि आह्लादकत्वं नैव जनयितुं शक्नोति। अतः यथा सुवर्णः सर्वेषाम् अभिष्टं भवति तथैव चमत्कारः इति।

चमत्कारविरहकाव्यस्य यथा उदाहरणं यथा "**वेल्लत्पल्लव संमिलल्लत- - - -दूरे त्वमेवंविधः॥**"[11]इति पद्यम्।श्लोकस्य अयमेव भावार्थः यत्, रे मम मित्रम् रक्ताशोकवृक्षः ! तव पत्राणि कम्पितानि सन्ति, लता त्वम् आलिङ्गयति, तव पुष्पाणि अतिसुन्दराणि। परं हे मित्र सौन्दर्यस्य उपसंहारं कुरु। कुतश्चेत् दूरदेशे स्थिते सति मम प्राणः गम्यमानः परं त्वं कामद्रेकरूपं धारयति।

एवमेव चमत्कारो यथा कालिदासस्य "**रक्तस्त्वं नवपल्लवैरहमपि - - - - सशोकः कृतः॥**"[12]इति श्लोकः। श्लोकस्य अभिप्रायः यत् नवीनपत्रकारणात् त्वं रक्तवर्णविशिष्टः अभवत्। अहमपि प्रियायाः स्पर्शनीयगुणवशात् अनुरक्तः अस्मि। मधुकरः भवतीं प्रति आगच्छति। अतः मम प्रियमित्रम्, मां प्रति मदनस्य वाणः आगच्छति। प्रियायाः पादनु-पूरस्य यथा शब्दः भवति तथैव ममापि। सुतराम् आवयोः सर्वं वृत्तान्तं समानमेव। परं मे प्रिय मित्रं किं वदामि ! विधाता मां सशोकरूपेण निर्मितवान् परं भवन्तम् अशकोरूपेण। अनेन तु काव्यचमत्कारं द्रष्टुं शक्यते।

समीक्षायां कतिविधः चमत्कारः इति जिज्ञासा अस्ति किल?इदानीं समाधीयते क्षेमेन्द्रवचनेन तद्यथा- "**दशविधश्चमत्कारः – अविचारितरमणीयः, विचार्यमाणरमणीयः,**

**समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलङ्कारगतः, रसगतः, प्रख्यातवृत्तिगतश्चेति।**"[13]

**इदानीम् एकैकस्य उदाहरणं प्रदीयते –**

1. अविचारितरमणीयचमत्कारस्य उदाहरणं यथा -"**शूराः सन्ति सहस्रशः - - - भवे दुर्लभः॥**"[14]इति श्लोकः

अस्य श्लोकस्य अयमेव तात्पर्यं यत् अस्मिन् संसारे सहस्रः वीरपुरुषाः सन्ति, तथा च चारित्र्यसंपन्नविद्वद्भिः संसारः परिपूर्णः अपि च कलानिपुणाः अगणिताः सन्ति, अरण्येष्वपि अनेके आश्रिताः भवन्ति। परं स्वप्राणेभ्यः अधिकप्रियधनं यः त्यजति सैव बुद्धिमान् इति। वस्तुतस्तु पुण्यवान् धन्यपुरुषः अस्मिन् संसारे दुष्प्राप्यः इत्यर्थः। अनेन ज्ञायते यत् अस्मिन् श्लोके यतं चमत्कारं वर्तते तत्तु अविचारितम् इति।

2. विचार्यमाणरमणीयचमत्कारस्य उदाहरणं यथा –"**अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि - - -विना क्वापि चेतः॥**"[15]इति। अस्मिन् श्लोके प्रतीयते यत् तस्याः अङ्गेषु कामाग्निरुपः ज्वरः वर्तते। नेत्राभ्यां ध्यानमुद्रा प्रतीयते, कण्ठे जीवः विद्यते। कोमलहस्ते कपोलं संस्थाप्य दीर्घकालीनविश्रामे रतः। तस्य स्कन्धोपरि वीणा, वक्षस्थले चन्दनलेपः, वचसा मौनम् इति। एवंसति सर्वे गुणाः तस्य स्थितिशीलाः परं मनः स्थिरं नैव। मनः अस्थिरम् इत्यत्र चमत्कारः प्रकाश्यते।

3. समस्तसूक्तव्यापीचमत्कारस्य उदाहरणं यथा –"**माधुर्यानुभवेऽपि ते- - - पुनर्भारंकुर्वन्त्यभी॥**"[16] इति पद्यम्। अस्मिन्पद्ये अयमेवभावार्थः प्रतीयते यत् हे सुन्दरीप्रिये किं वा वदामि यद्यपि तव कटाक्षेण मादुर्यः अनुभूयते तथापि तत् अत्यन्तं तीक्ष्णमिति, अक्षिमतारका यद्यपि अक्षिमकोणे स्थिररूपेण विद्यते तथापि तत् पुरुषाणाम् अनुरगप्रकटने चेष्टाशीलः, अहंकारवशात् चञ्चलतां न त्यजति। एवञ्च किम् आश्चर्यम् ! तत् कर्णपर्शेण प्रणयम् उद्भावयति। अनेन चमत्कारः प्रतिपाद्यते।

4. सूक्तैकदेशदृश्यचमत्कारस्य उदाहरणं"**नित्यार्चा हृदयस्थितस्य - - -दिवसैर्देव ! त्वदाराधनात्॥**"[17]इति। अनेन पद्येन ज्ञायते यत् हे ईश्वरः ! तया सुन्दरीद्वारा रक्तकमलम्,

नीलकमलम्, चन्दनादिभिः भवतः नित्यपूजनम्, नामजपेन भवन्तं प्रति प्रगाढः भक्तिः प्रकटितः। अनेन तु मोक्षप्राप्तिः भवत्येव इत्यर्थः। अत्र तु काव्यचमत्कारः दृश्यते।

5. शब्दगतचमत्कारस्य उदाहरणम् – **"इतश्चश्चचूतच्युतमधुचया- - -म्भाकलितकमला-मोदसुहृदः॥जृ"**[18] इति अस्मिन् पद्ये एकः सुन्दरः काव्यचमत्कारः द्रष्टुं शक्यते। तद्यथा- रसपूर्णरसालानां सुगन्धैः सुगन्धितः वायुः अलिनां कृते आनन्दप्रदानाय चतुर्षु दिक्षुः प्रवहति। अपि च प्रस्फुटीतानां कमलानां सुगन्धयुक्तः वायुः निशान्ते कामकेलिश्रमम् शमयति। अस्मिन् श्लोके अर्थचमत्कारापेक्षया शब्दचमत्कारः अधिकतया दृश्यते।

अस्मिन् पत्रे पञ्चानां चमत्काराणाम् उदाहरणं प्रदत्तमस्ति। अवशिष्टानां ज्ञानाय मूलग्रन्थद्रष्टव्यः। कति चमत्कारकारणमित्यस्य समाधानावसरे कथ्यते कविचन्द्रः विश्वेश्वरः –

**"गुणं रीतिं रसं वृत्तिं पाकं - - - - ब्रुवते बुधाः॥"**[19]

अर्थात् गुणः, रीतिः, रसः, वृत्तिः, पाकः, शय्या, अलङ्कारः एते सप्त चमत्कार-कारणमिति। क्षेमेन्द्रस्य अभिमतानुसारेण **"औचित्यस्य चमत्कार- कारिणश्चारुचर्वणे"**[20] इति। अर्थात् औचित्यं हि काव्ये चमत्कारं जनयति।अपि च**"विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः"**[21]इति काव्यालोकग्रन्थे।

एवमेव चमत्काराधारेण कविचन्द्रेण विश्वेश्वरमहोदयेन चमत्कारकाव्यस्य विभाजनं कृतवान्।

**"त्रैविध्येन चमत्कारि चमत्कारितरं यथा।**
**चमत्कारितमं चेति प्रविविच्य निदर्शितम्॥"**[22]

अर्थात् चमत्कारीकाव्यं, चमत्कारितरकाव्यं, चमत्कारितमकाव्यमिति त्रिधा काव्यभेदः भवत्येव। इदानीम् एकैकस्य विषये आलोच्यते।

1. **चमत्कारिकाव्यम्** –**"शब्दचारुत्वतात्पर्ये चमत्कारीति कथ्यते।"**[23]अर्थात् यत्र शब्दचारुत्वं यत्र विद्यते तत्र चमत्कारिकाव्यं भवति। अस्य काव्यस्य परिगणना शब्दिचित्रं नाम्नि अधमकाव्ये भवति।

2. **चमत्कारितरकाव्यम्** –"**वाच्यचारुत्वतात्पर्ये चमत्कारितरं मतम्।**"[24]नाम यस्मिन् काव्ये वाच्यस्य चुत्वं विद्यते तत्काव्यं चमत्कारितरकाव्यं भवति।अस्य काव्यस्य परिगणना अर्थचित्रनाम्नि अधमकाव्ये तथा गुणीभूतव्यङ्ग नाम्नि मध्यमकाव्ये भवति।

3. **चमत्कारितमं काव्यम्** –"**प्रत्येयार्थस्य चारुत्वे चमत्कारितमं मतम्।**"[25]अर्थात् यस्मिन् काव्ये प्रत्येयार्थस्य चारुत्वं प्राधान्येन विद्यते तत्काव्यं चमत्कारितमकाव्यं भवति।अस्य काव्यस्य परिगणना ध्वनिकाव्यं नामके उत्तमकाव्ये भवतीति।

**निष्कर्षः-**

समीक्षान्ते निष्कर्षरूपेण वक्तुं शक्यते यत्–

**"रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते।**
**तच्चमत्कारसारत्वे सर्वत्राऽप्यद्भूतो रसः।**
**तस्माद्द्भुतमेवाह कृती नारायणो रसम्॥**"[26]

अर्थात्चमत्कारकारकारणानि सन्ति, चमत्कारभेदाः अपि सन्ति, चमत्कारभेदेन काव्यभेदाः भवितुमर्हन्ति तथैव रसेन चित्तचमत्कारः एधते। प्रमाणान्तु साहित्यदर्पणग्रन्थे रसानां सारः (परिपक्वता) चमत्कारः इति विश्वनाथमतम्। अपि च रसस्य सारः चमत्कारः स तु सर्वत्र सवैरेव अनुभूयते। एवञ्च विशिष्टतया अद्भूतरसस्य सारः "**चमत्कारो चित्तविस्ताररूपो विस्मयापरपर्य्यायः।**"[27] इति नारायणाभिमतम्।अपि च सर्वान्ते पण्डित-राजेन जगन्नाथेन तदीये रसगङ्गाधरग्रन्थे"**रमणीयार्थ- प्रतिपादकः शब्दः काव्यम्। रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता। लोकोत्तरत्वं चाह्लादगतः चमत्कारापर-पर्यायः अनुभवसाक्षिको जाति- विशेषः**"[28] इत्यनेन चमत्कारशब्दः काव्यरमणीयार्थे प्रयुक्तः।

डा. वी. राघवन् महोदयः अपि चमत्कारविषये निजमतं व्यनक्ति। तद्यथा –"It is a striking coincidence that, like the concept of Rasa, the concept of Chamatkara also came into the Alamkara Sastra from the Paka sastra. Its early semantic history is indistinct and dictionaries record only the later meanings, the chief of which are astonishment and poetic relish. Camatkaracame to mean a sudden fillip relating to any feeling of a pleasurable type"[29].उपोरान्तविचारेण वक्तुं शक्यते यत् रसेन एधते चित्तचमत्कृतिः इति शिवम्।

**ग्रन्थसंकतेतः**

1. च.म.च. -पृ.2
2. सा.द. – पृ.87
3. ना.शा. – 6.16
4. च.म.च. – पृ.2
5. का.लं. – 1.16
6. का.लं. – 6.28
7. ध्व.लो. - पृ.208
8. व.क्रो.जी. – 1.2
9. क.क.भ. - 3.1
10. क.क.भ. - 3.2
11. क.क.भ. – पृ.76
12. क.क.भ. – पृ.77
13. क.क.भ.-पृ.78
14. क.क.भ.- पृ.79
15. क.क.भ. - पृ.80
16. क.क.भ. - पृ. 80
17. क.क.भ. - पृ.81
18. क.क.भ. - पृ.81
19. च.म.च. – पृ.2
20. औ.वि.च. – 1.3
21. का.लो. – भू. पृ.27
22. च.म.च. – पृ.73
23. च.म.च. – पृ.73
24. च.म.च. – पृ.73
25. च.म.च. – पृ.77
26. सा. द. – पृ. 87
27. सा. द. – पृ. 86
28. र.गं. ध. – पृ. 14
29. S.C.A.S.– पृ. 268

**सहायकग्रन्थाः**

1. औ.वि.च. – औचित्यविचारचर्चा, आचार्य श्रीव्रजमोहन झा, चौखम्वा विद्याभवन, वाराणसी, 1982

2. का.लं. – काव्यालंकारः, डा. रामानन्द शर्मा, चौखम्बा संस्कृत सीरीज, वाराणसी, 2013

3. का.लो. – काव्यालोकः, श्रीमती रमा गुप्ता, पब्लिकेशन स्कीम, जयपुर – 1, वि.सं. 2046

4.क.क.भ. – कविकण्ठाभरणम्, प्रा. वामन केशव लेले. मोतीलाल बनारसीदास, 1963

5. च.म.च. – चमत्कारचन्द्रिका, डा. पन्दिरि सरस्वतीमोहन्, मेहरचन्द लछमनदास, देहली - 1972

6. ध्व.लो. – ध्वन्यालोकः, श्री वदरीनाथ झा, विद्या विलास प्रेस, वेनारस, 1937

7. र.गं.ध. – रसगङ्गाधरः, श्री मधुसूदनशास्त्री, बनारस हिन्दू यूनिवर्सिटी, वि.सं 2020

8. सा.द. – साहित्यदर्पणम्, आचार्य शेषराजशर्मा, रेग्मी, चौखम्बा कृष्णदास अकादमी, वाराणसी, 2016

9. S.C.A.S.– Some Concept Of Alamkara Sastra, V. Raghavan, The Adyar Library, Adyar - 1942

# वास्तुशास्त्रे वज्रलेपविधिः

**डा.गणेशकृष्णभट्टः**

अतिथि-अध्यापकः(सहायकाचार्यपदसमानः)

ज्योतिषविभागः,के.सं.वि, गुरुवायूरु परिसरः

**कुञ्चिकापदानि**

वज्रलेपः, वेदी, आरूढोत्तरम्, अधिष्ठानम्, क्षुद्रवाजनम्, सुधा, तिन्दुकफलम्, द्रोणः, कल्कचूर्णः, वज्रसङ्घातः, निर्यासः, क्वाथः।

**सारांशः**

वास्तुशास्त्रे गृहनिर्माणार्थं योग्यभूमेः चयनादारभ्य गृहनिर्माणपर्यन्तं विविधा आयामाः, नियमाः, सिद्धान्ताः, निर्देशाश्च नैकेषु ग्रन्थेषु समावेशिताः विद्यन्ते। कालेऽस्मिन् गृहनिर्माणार्थं गृहावयवनिर्माणार्थं च सन्ति नैके मार्गा उपायाश्च। तेषु केचनोपायाः सार्थकाश्चेत् अन्ये केचन निरर्थकाश्च वर्तन्ते। अस्मत् पूर्वजानां ऋषीणां शास्त्राणां च मतमभिप्रायञ्चानुसृत्य गृहनिर्माणं वयं सामान्यजनाः लोके कुर्वन्तः स्मः। तेष्वत्र मया गृहनिर्माणकाले वज्रलेपनामकस्य कर्मविशेषस्य विषये यथाशक्ति यथाज्ञानं निरूप्यते। मम शोधकार्याधारभूते वास्तुविद्या नामके ग्रन्थे तावत् आचार्येण कण्ठतः वज्रलेपयोगः न प्रोक्तः। परन्तु व्याख्यानेन ग्रन्थान्तरेण वा अस्माभिरेव ज्ञात्वा अनुसर्तव्यं भवति। तदनु मया यथाशक्ति ग्रन्थान्तरमप्यवलेक्य किञ्चिदत्र प्रस्तूयते।

**प्रस्तावना**

अस्माकं पूर्वजाः ऋषिमुनयः आश्रयार्थम् आवासार्थञ्च गृहादीनाम् आवश्यकताम् अनिवार्यताञ्च विशेषरूपेण ज्ञात्वा काञ्चित् सिद्धान्तान् प्रतिपादितवन्तः। ते च सिद्धान्ताः कालान्तरे वास्तुशास्त्रत्वेन निरूपिताः। तैरुक्ताः नानाविधसिद्धान्ताः वास्तुशास्त्रे अन्तर्भाविताश्च। वास्तुशास्त्रमित्येतत् ज्योतिषशास्त्रे एव अन्तर्भूतं भवति। तत्रापि त्रिषु स्कन्धेषु अन्यतमे संहितास्कन्धे वास्तुविषयो विस्तररूपेण निरूपितो वर्तते।

**मुख्यविषयः**

 ISSN : 2277-2359

वास्तुशास्त्रे गृहनिर्माणयोग्यभुवः चयनादारभ्य गृहनिर्माणपर्यन्तं विविधा आयामाः, नियमाः, सिद्धान्ताः, निर्देशाश्च समावेशिताः। आदौ तावत् शास्त्रस्यास्य जन्म वेदकाले यज्ञभूमिचयनार्थं तथा वेदीनिर्माणार्थं चाभवदित्युच्यते। कालान्तरे सर्वजनोपयोगिरूपेण लोकाय परिचितम्। परन्त्वेतदपि ज्ञातव्यमेव यत् यज्ञादीनां पूर्वमपि मानवानामावासस्य आश्रयस्य च कल्पना जातैवासीत्। पुनश्च मानवः वासभूमिनिश्चयार्थं चिन्तनमकरोत्। वायुपुराणे वास्तुशास्त्रीयसमराङ्गणसूत्रधारग्रन्थस्य सहदेवाधिकारे च आशयोऽयं सुन्दरतया निरूपितः।

भारतस्य चतसृष्वपि दिक्षु वास्तुग्रन्थानामुपलब्धिः वर्तत एव। अनेनैव सिद्ध्यति यत् सम्पूर्णभारते वास्तुशास्त्रीयाणां सिद्धान्तानां प्रसारः प्रचारश्चासीदिति। वस्तुतः सांस्कृतिकभारतस्य गृहदेवालयादिविविधालयानां विकासे शास्त्रस्यास्य महत्त्वपूर्णा भूमिका अस्त्येव। भारत एव न, सम्पूर्णे विश्वे प्राप्तनानावशेषाणामवलोकनेन शास्त्रस्यास्य फलश्रुतेरनुभवो जायते।

तेषां नाना ऋषीणां शास्त्राणां मतमभिप्रायञ्चानुसृत्य गृहनिर्माणं वयं सामान्यजनाः लोके कुर्वन्तः स्मः। तेष्वत्र च मया गृहनिर्माणकाले वज्रलेपनामकस्य कर्मविशेषस्य विषये यथाशक्ति यथाज्ञानं निरूप्यते। तत्रादौ वास्तुविद्या नामके ग्रन्थे तावत् आचार्येण कण्ठतः वज्रलेपयोगः न प्रोक्तः। परन्तु व्याख्यानेन ग्रन्थान्तरेण वा अस्माभिरेवागन्तव्यं भवति। ग्रन्थे च -

**अङ्घ्रेस्तथा मध्यखण्डमारूढं भूषणाय च।**
**शिलाबद्धमसूरं च सुधामिलितभित्तिकम्।**
**पञ्चैतान्यपि निन्द्यानि दृश्यन्ते नरसद्मनि ॥**[1] इति।

श्लोकेऽस्मिन् स्तम्भस्य मध्यखण्डकल्पनम्, भूषणाय केवलमारूढोत्तरनिवेशः पाषाणमयमधिष्ठानम्, भित्तौ संस्कृतसुधाविशेषलेपः, रूपोत्तरे क्षुद्रवाजनकल्पनमित्येतानि पञ्चकर्माणि वर्ज्यानि इति कथितम्। तन्नाम मनुष्यालयनिर्माणे एतानि पञ्चकर्माणि

[1] वा.वि. 7/54,55

निषिद्धान्येव। तथापि आचार्याः केवलं शिलामयमधिष्ठानं वर्जयित्वा अन्यान् चतुरः उत्तमेष्वेव अन्तर्भावयन्ति इति। श्लोके – सुधामिलितभित्तिकम्, इति शब्दः पठ्यते। सुधायोगः इत्युक्ते वज्रलेपयोगः एव इति तु ग्रन्थान्तरादवगम्यते। तस्मात् योगममुं विचारयामश्चेत् श्रीमान् वराहमिहिराचार्यः बृहत्संहितायां कथयति –

**आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः।**

**बीजानि शल्लकीनां धन्वनवल्को वचा चेति ॥**

**एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च।**

**अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥**

**श्रीवासकरसगुग्गुलुभल्लाककुन्दुरूकसर्जरसैः।**

**अतसीबिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥**[1]

अर्थात् अपक्वं तिन्दुकफलम्, आमं कपित्थकफलम्, तथा शाल्मलिवृक्षस्य पुष्पम्, एवं शल्लकीवृक्षाणां बीजानि धन्वनवृक्षस्य त्वक् इत्येतैः द्रव्यैः सह सलिलद्रोणः क्वाथयितव्यः। अत्र द्रोणः तावत् षट्पञ्चाशदधिकपलशतद्वयं भवति। क्वथितसलिलद्रोणस्य यावता अष्टभागावशिष्टः भवति तदा अवतारणीयः। अष्टभागः इत्युक्ते द्वात्रिंशत् पलानि। अस्यावशिष्टस्य अष्टभागस्य कृते कल्कचूर्णः समायोजनीयः। कल्कचूर्णस्य निर्माणं प्रोच्यते – श्रीवासकवृक्षस्य निर्यासः, गुग्गुलु-भल्लातकवृक्षाः, कुन्दुरुकवृक्षनिर्यासः, सर्जरसवृक्ष-निर्यासः इति एतैः सहैव अतसीवृक्षस्य बिल्ववृक्षस्य च तत्तद् भागयोजनेन जायते। क्वथितावशिष्टे अस्य कल्कचूर्णस्य योजनेन वज्रलेपाख्यः सिद्ध्यति। अस्य विशेषतां च वदति पुनः वराहमिहिराचार्यः –

**प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु।**

**सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी ॥**[2]

---

[1] बृ.सं. 57/1-3

[2] बृ.सं. 57/4

अत्युष्णं वज्रलेपं देवप्रासादेषु, भवनेषु, वातायनेषु, शिवलिङ्गेषु, देवप्रतिमाभित्तिषु, कूपादिषु च दातव्यम्। ईदृशी निर्मितिः वर्षाणां सहस्रायुतपर्यन्तं तथैव तिष्ठतीति शास्त्रकाराणां वचनात् ज्ञायते। वज्रलेपनिर्माणस्य प्रकारान्तरं कथयति –

**लाक्षाकुन्दुरुगुग्गुलुगृहधूमकपित्थबिल्वमध्यानि।**
**नागफलनिम्बतिन्दुकमदनफलमधूकमञ्जिष्ठाः ॥**
**सर्जरसरसामलकानि चेति कल्कः कृतो द्वितीयोऽयम्।**
**वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु ॥** [1]

पूर्वोक्तक्रमेण क्वाथं संसाध्य लाक्षावृक्षनिर्यासः, कुन्दुरुकविशेषः, गुग्गुलुः, श्यामेति प्रसिद्धः गृहधूमः, कपित्थवृक्षफलम्, बिल्वफलम्, नागफलम्, निम्बफलम्, तिन्दुकफलम्, मदनफलम्, मधूकफलम्, मञ्जिष्ठाफलम्, सर्जरवृक्षनिर्यासः, आमलकफलं चेति सर्वेषां सम्मिश्रणेन चूर्णं कृत्वा क्वाथे संयोजनेन वज्रलेपः सिध्यति इति द्वितीयः प्रकारः। अस्यापि वज्रलेपप्रकारस्य गुणस्तु पूर्वोक्तवदेव। सम्प्रति अन्यः प्रकारः निरूप्यते –

**गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च।**
**निम्बकपित्थरसैः सह वज्रतलो नाम कल्कोऽन्यः ॥**

प्रथमोक्ते क्वाथे गो-महिष-अजानां शृङ्गैः, तथा गर्दभरोमभिः, महिषचर्मगोमयादि-गव्यवस्तुभिः, निम्बफल-कपित्थकफलैश्च कृतः कल्कः संयोजितस्तर्हि वज्रतलाख्यः सिध्यति। अस्यापि गुणः पूर्वोक्तप्रकारद्वयस्य कृते उक्तगुणसदृश एव विद्यते। अधुना वज्र-सङ्घातक्रमः कथ्यते –

**अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः।**
**मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः ॥** इति।

अर्थात् यावत् प्रमाणमितः वज्रलेपः अपेक्षितः तस्य अष्टौ अंशाः सीसकभागाः, कांसस्य भागद्वयम्, एकः च रीतिकाभागः इति सर्वान् संयोज्य प्रथमगुणोक्तवत् कार्यम्।

[1] बृ.स. 57/5,6

अस्यैव योगस्य वज्रसङ्घातयोग इति नाम। एषः योगः मयकथितः वर्तते। बृहत्संहितायाम् अस्य श्लोकस्य व्याख्याने भट्टोत्पलः मयस्य श्लोकमुदाहरति –

**सङ्गृह्याष्टौ सीसभागान् कांसस्य द्वौ तथांशकम्।**

**रीतिकायास्तु सन्तप्तो वज्राख्यः परिकीर्तितः ॥** इति।

वास्तुविद्यायाः व्याख्याने एव ईशानशिवगुरुपद्धतौ सुधायोगविषये अथवा वज्रलेप-विषये उक्तान् विचारान् सङ्गृह्य निरूपितं[1] वर्तते –

**पूर्वं ध्वंशं करालं मधुघृतकदलीनालिकेराम्बुमाष**

**व्योषंवार्क्षः कषायः स्तनजदधिगुलत्रैफलाम्भांसि चैवम्।**

**वृद्धान्यंशक्रमेण स्फुटशशिधवलं चूर्णमुक्तं शतांशम्**

**पिष्टं सर्वं यथावद् भवति वरसुधा वज्रबद्धं यथैव ॥**

**चतुस्त्रिद्वयमासान्तमुषिता युक्तिमर्दिता**

**श्रेष्ठमध्याधमा ज्ञेया सुधा सौधादिबन्धनी।**

**अथ कुड्यादिकं शुष्कं नीरन्ध्रं सुसमं मृदु।**

**शुद्धाम्भसादौ प्रक्षाल्य दधिक्षीरगुलान्वितम् ॥**

**बद्धोदकेन चालिप्य व्यपोह्यैकदिनं ततः।**

**सुधां नियोजयेद् युक्त्या यथा यत्रोचितं भवेत् ॥** इति।

विषयेऽस्मिन् अस्माभिः एतदवगन्तव्यं यत् अस्माकं पूर्वजैः वास्तुतत्वविद्भिः मुनिभिः एषः वज्रलेपाख्यः लेपयोगविशेषः प्रपञ्चितः। स च लेपयोगः गृहस्तम्भकवाटादिषु प्रयुक्तः। तेन कृमिजलावसेकताप्रतापादिदोषेभ्यः जीर्णतादिसमस्याः अपगच्छन्ति, सदृढता उत्पाद्यते च। तस्मात् पूर्वोक्तानां गृहादीनां नूतनायाम् अवस्थायामेव स्थापयितुं सुबहूपकरोति। पुनः पुनः लेपे दत्ते सत्यपि बहुकालानन्तरम् अस्य सारांशः नश्यति, हानिशङ्का उद्भूयते चेत्तर्हि शक्त्यनुसारं पुनः लेपः दातव्यः। एवं रूपेण असकृत् कृते सति

[1] ई.शि. 33/66-69

तत्प्रभावात् गृहादयः वर्षसहस्त्राणाम् अयुतपर्यन्तं चिरं तिष्ठन्तीति भावेन बह्रूपकारकोऽयं वज्रलेपयोगः प्रतिपादितः इति भाव्यम्।

**उपसंहारः**

अयं वज्रलेपाख्यः लेपविशेषः गृहस्य भित्तेः च कृमिजलावसेकताप्रतापादीनां दोषाणां जीर्णतादिसमस्यानाम् अपाकरणाय, सदृढता उत्पादनाय च अनिवार्यभूतो वर्तते। अतः पूर्वोक्तानां गृहादीनां नूतनावस्थारूपसंरक्षणार्थं सुबह्रूपकरोति। तस्मात् लोकस्य प्रत्येकोऽपि जनः गृहनिर्माणसमये पूर्वजैः प्रतिपादितान् एतादृशान् विचारान् अवलोक्य एव यदि अपेक्षितं भवनं निर्माति तर्हि जीवने भवनजनितदोषैः रहितस्सन् जीवति इत्यत्र नास्ति संशयलेशः इति कथयन् अत्रैवोपसंहरामि।

**सन्दर्भग्रन्थसूची**


| ग्रन्थनाम | लेखकः/सम्पादकः | प्रकाशनम् | वर्षः |
|---|---|---|---|
| 1.वास्तुविद्या | डा.श्रीकृष्ण जुगनू | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | 2009 |
| 2.बृहत्संहिता | डा.सुराकान्त झा | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | 2008 |
| 3.ईशानशिवगुरुपद्धतिः(वास्तुविद्यायाः व्याख्यानतः) | डा.श्रीकृष्ण जुगनू | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | 2009 |

# अर्चावताररहस्यम् - एकमध्ययनम्

**चन्दन् मुखर्जी**
शोधच्छात्रः, संस्कृतं तथा दर्शनविभागः
रामकृष्णमिषन् विवेकानन्दशैक्षिक-शोधविद्यालयः
बेलूर् मठः, पश्चिम बङ्गालम्

**कुञ्चिकाशब्दाः**

वेदः, भक्तिः, श्रीमन्नारायणः, अर्चावतारः, आळवारः, दिव्यदेशम्, मुक्तिः, भारतीयसंस्कृतिश्च।

**शोधविषयः**

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्"[1] इति भगवद्वचनमनुस्मृत्य भगवदाराधने भक्तिमार्गस्यावदानं त्वस्वीकार्यमेव। भक्तो भक्तिर्भगवांश्चेति वैष्णवदर्शनस्य हृदयम् इति वक्तुं शक्यते। भक्ता भक्त्येश्वरमुपासते। तत्रापि विनालम्बनमुपासनं तथा दार्ढ्यतां न याति। तस्माद्भक्तैः कस्मिंश्चिदालम्बने भगवन्तं कल्पयित्वा भक्त्या यथासामर्थ्यं यथाभिमतं यथारुचि उपास्यते। एवं गृहग्रामनगरजलशैलादिषु वर्तमानो भगवतो मूर्तिविशेषोऽर्चावतारः। अर्च्यते इति अर्चा। एवं मन्त्राधीनो भावाधीनः स्वभक्तजनवाञ्छितकल्पतरुर्भगवान्नारायणः सर्वसहिष्णुर्भक्तजनानुग्रहार्थं धृतावतारः। अत्र भगवतो विष्णोरर्चास्वरूपमेव शोधस्यास्य प्रकृतविषयः। प्रकृतशोधशीर्षकञ्च अर्चावताररहस्यम् - एकमध्ययनम् इति।

**शोधोद्देश्यम्**

मदीयेऽस्मिन् शोधलेखे वैदिकलौकिकप्रमाणपुरःसरमर्चावतारस्य गूढं तात्पर्यमैदम्प्राथम्येन निहितं वर्तते। लेखस्य निमित्तान्यधः प्रदर्शितानि।

i. ये मुमुक्षवो भक्ता भगवद्दासा विष्णूपासनरताः, तेऽनेन प्रकृतलेखेन कृतकृत्या भवेयुः।

ii. अर्चावतारतत्स्वरूपप्रयोजनमाहात्म्यद्योतनायायं लेखः।

iii. आसमुद्रहिमालये भगवतो विष्णोरष्टोत्तरशतं दिव्यमन्दिराणि विलसन्ति। तानि

---

[1]श्रीमद्भगवद्गीता (४/११)

"दिव्यदेशम्" इति नाम्नाभिधीयन्ते। तेषां दिव्यदेशानां सामान्यविवरणप्रदर्शनमपि शोधस्यैकमुद्देश्यम्।

iv. अन्तिमे भक्तिसम्प्रदायसंरक्षणञ्च शोखलेखस्यास्य मुख्योद्देश्यमाकलितम्।

**शोधपरिमितिः**

अर्चावतारे बहूनि वैदिकानि लौकिकानि च प्रमाणानि तु नितरां विराजन्ते। अत्र केवलं केषाञ्चन वैदिकप्रमाणानां सङ्गतिः प्रदर्शिता। लौकिकप्रमाणानां बाहुल्यात्तानि न प्रदर्शितानि। विशेषत एव वेदान्तदेशिककृतानि स्तोत्रादीनि दिव्यदेशप्रमाण आनीतानि। किञ्च भगवतो विष्णोरष्टोत्तरशतं दिव्यदेशमत्र नोल्लिखितम्। तेषु कतिपयानां प्रसिद्धानामुल्लेखो मुख्यरूपेण कृतः।

**शोधप्रयोजनं फलञ्च**

विग्रहाराधनस्यार्वाचीनत्वखण्डनाय, किञ्चार्चाराधनस्य सुप्राचीनत्वप्रतिष्ठापनाय लेखोऽयं प्रवृत्तः। श्रुतिस्मृतिन्यायेतिहासपुराणादिभ्यः प्रमाणान्युद्धृत्यार्चाराधनस्य भक्तिमार्गे माहात्म्यख्यापनञ्चात्र प्रयोजनम्। किञ्चास्तिकानां बहूपकाराय भवत्ययं लेखः। विशेषतो ये भक्तिमार्गे रता वैष्णवः सन्ति, तान्नपि प्रचोदयत्ययं प्रबन्धः। अन्ते वैष्णवसिद्धान्त-तत्स्थापनरक्षणप्रसारप्रचारादिकञ्च सुतरां फलमिति सिद्धम्।

**भाविगवेषणसम्भावना**

महाकाव्यखण्डकाव्यनाटकदर्शनशास्त्रधर्मशास्त्रादिषु भूयशोऽर्चावतारतद्विवरण-प्रयोजनमाहात्म्यञ्च ध्वनितम्। तत्र प्रतिशास्त्रमर्चावतारविवरणाय महान् गवेषणावसरो विद्यते। किञ्चोष्टोत्तरं दिव्यदेशमतीव प्रसिद्धं भारतवर्षे। तेषां दिव्यदेशानां तथ्यसङ्ग्रहण-पुरःसरमैतिहासिकधार्मिकपरम्परागततत्त्वान्वेषणे महान् अवसरस्तु विद्यत एव।

**प्रास्ताविकम्**

अस्मत्पूर्वाः सदसद्विचक्षणाः त्रिकालाबाध्यधुरन्धरा आर्या लोकहितायैहिका-मुष्मिकश्रेयःप्रतिपादकानि नैकानि शास्त्राणि विरचय्य नो लोचनमुदमिलयन्। महता कालेनानायासेन स्वानुभवं प्रमाणीकुर्वद्भिस्तैरैहिकामुष्मिकयोर्मध्ये क्षणं भङ्गुरं दुःखेन

 ISSN : 2277-2359

सम्मिश्रितमैहिकमपेक्ष्य शाश्वतं नित्यमनन्तमामुष्मिकमेव श्रेयः सर्वापेक्षयोत्कृष्टमिति महतोद्घोषेण प्रतिपादितम्। तादृशञ्च श्रेयः सर्वान्तर्यामिनः सर्वज्ञस्य समाराधनेन विना प्राप्तुं नैव शक्यते। सः च परमः पुमान् परव्यूहविभवान्तर्याम्यर्चारूपेण पञ्चात्मना अवतिष्ठत इति "स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतम्"[1] इत्यादिश्रुतयो विवादरहितं प्रतिपादयन्ति। एतेषु पञ्चसु रूपेषु पञ्चममर्चारूपमेव भक्तवात्सल्येन बहुधा प्रशंसितं भवति। एवमियमर्चा न केवलमामुष्मिकमपि त्वैहिकमाराधकैरभीप्सितं फलं प्रयच्छति। अद्यापि ग्रामराज्यराष्ट्रसमृद्धिं समुद्दिश्य तत्र तत्र देवालयादिषु उत्सवाः पूजाविधयश्च क्रियमाणा दृश्यन्ते। पुरापि पुण्यशीलाः चक्रवर्तिनो राजानो वणिजः समाजसंस्कारकाः च समाजसमृद्धिमुद्दिश्यैव बहून् देवालयान् प्रतिष्ठापयामासुः। एवं देवालयादिषु प्रतिष्ठितस्य अर्चावतारस्य स्वरूपं सनातनत्वं वेदसिद्धत्वं भक्तैरुपास्यत्वं माहात्म्यं प्रयोजनमाक्षेप-समाधानाभ्यामुदाहरणसहितञ्चास्मिन् लेखे प्रतिपादयिष्यते।

**भगवान्**

विशिष्टाद्वैतवेदान्ते भगवान् चिदचिद्विशिष्टः श्रीमान्नारायण एव। चिज्जीवः, अचित् प्रकृतिः, चिदचिद्विशिष्टश्चेश्वरः। सो निर्गुणोऽपि न निर्विशेषः। भगवान् सर्वदा सविशेषः, तत्सृष्टिरपि सविशेषैव। सोऽशेषकल्याणगुणो भगवान् वासुदेवो नैकाभिः श्रुतिभिर्नैकाभिः स्मृतिभिश्च लक्षितः, प्रकृतदिव्यमङ्गलविग्रहविशिष्टोऽनन्यशरणः सत्यकामो निखिलजग-त्कारणत्वमुमुक्षुध्येयत्वाभ्यां विशेषितः, साम्यादिभ्रमापादकश्रुतीनां तात्पर्येणोपपादितः, कारणत्वादिग्रहधर्मितयावच्छेदकभूतः। सर्वविद्यानुयायिभिः स्वरूपनिरूपकधर्मत्वेन प्रसिद्धैरानन्दत्वसत्यत्वज्ञानत्वानन्तत्वाद्यखिलहेयत्वैः प्रकृतविग्रहोपलक्षितो दिव्यात्म-स्वरूपश्च। नारायणः परमपुरुषोऽनन्तगुणसमन्वितोऽनन्याधीनैश्वर्यः[2] उभयविभूतिनायकः सर्वभूतान्तरः[3] अपहतपाप्मा[1] सर्वान्तर्यामी[2] षडैश्वर्यसम्पन्नो[3] वैकुण्ठनिवासी चेत्यादि-विशेषणैर्विभूषितः। इतोऽप्यष्टभिर्विशेषणैर्भगवतो विष्णोर्माहात्म्यं गीयते -

---

[1]याज्ञिक्युपनिषत् ७९/१६/२

[2] "ब्रह्मादिदेवसङ्घेषु स एव पुरुषोत्तमः। स्त्रीप्रायमितरत् जगद्ब्रह्मपुरःसरम्" (श्वेतश्वेतरोपनिषत् ६/७) इति।

[3] "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (नारायणोपनिषत् ५) इति।

"सर्वेशानः सहजमहिमा सर्वभूतान्तरात्मा
सर्वान्दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः।
कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यः
सिद्धोपायः स्फुरति पुरुषो वाजिनां संहितान्ते॥"[4] इति

समस्तानि श्रुतिस्मृतिन्यायवाक्यानि चिदचिद्विशिष्टाद्वैतेऽनन्तगुणकल्याणगुणगणे सर्वानुगते सर्वात्मके परमेश्वरे विष्णावेव पर्यवसितानि।

**परः, व्यूहः, विभवः, अन्तर्यामी, अर्चःच**

विशिष्टाद्वैतवेदान्त ईश्वरः पञ्चधा। स ईश्वरः पर-व्यूह-विभव-अन्तर्यामि-अर्चावतारेण निरूपितः। उच्यते तावत् सम्प्रदाये -

"परो व्यूहश्च विभवो हार्दश्चार्चेति पञ्चधा।
विग्रहानिच्छया गृह्णन्विभाति परमः पुमान्॥"[5] इति

अर्थात् परमः पुमान् श्रीमान् नारायण ईच्छया विग्रहान् गृह्णन् विभाति। श्लोके हार्द इत्यनेनान्तर्यामिणो ग्रहणम्। प्रत्येकस्य सुबृहत्कलेवरत्वात्तेषां सामान्यतया विवरणमधः प्रस्तूयते।

**अर्चावताररहस्यम्**

परव्यूहविभवान्तर्याम्यर्चावतारेषु पञ्चसु भगवद्रूपेष्वर्चावतार एव सर्वाधिको भक्तोपासनोपयोगी। भगवतो मूर्तिविशेष एवार्चावतारः। गृहग्रामनगरजलशैलादिषु स्थानेषु वर्तमाना भगवतो भव्यमूर्तिरिवार्चकैरर्च्यते।

---

[1] "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" (सुबालोपनिषत् ७/१) इति।

[2] "योऽसावसौ पुरुषः" (ईशावास्योपनिषत् १६) इति।

[3] "ऐश्वर्यं च तथा वीर्यं तेजः शक्तिरनुत्तमा।
ज्ञानं बलं यदेतेषां षण्णां भग इतीरितः।
एभिर्गुणैः पूर्णो यः स एव भगवान् हरिः॥" (वृद्धहारीतस्मृतिः ६/१६४-१६५) इति

[4] वेदान्तदेशिककृतम् ईशावास्यभाष्यम् (मङ्गलम् २)

[5] कृष्णमाचार्यः गयंपट्टै, अर्चावतारवैभवम्, श्रीकृष्णविसालमुद्रालय, कुम्भकोणम्, १९२१, पृष्ठसंख्या - ३३

अर्चकैरर्चितत्वादयमर्चावतारः। अयं सर्वसहिष्णुरिति कथ्यते। भक्तैर्यथामभिमतं यथासामर्थ्यं यद्यद्दीयते, भगवता तथैव तद्गृह्यते। स्वभक्तानामनुग्रहार्थं धृतोऽवतारोऽयम्।

**क.प्रकृतार्चावताररूपविशिष्टे भगवति कल्याणगुणाभ्युपगमः**

यथा विभवावतारेषु सार्वज्ञसर्वशक्तित्वपरमकारुणिकत्वादीनां गुणानां समावेशः। तथैवात्रापि अर्चावतारे भगवति कल्याणगुणाः समावेशिताः। वेदान्तदेशिकवचनेन तत् ज्ञायते -

"सौशील्यभावितधिया भवता कथञ्चित्
संछादितानपि गुणान् वरद त्वदीयान्।
प्रत्यक्षयन्त्यविकलं तव सन्निकृष्टाः
पत्युस्त्विषामिव पयोदवृतान् मयूखान्॥"[1] इति

अत्र भगवतः सौशील्यगुणा व्यज्यन्ते। कदाचिद्यदि भगवान् स्वनिष्ठपरत्वौपायिकगुणान् प्रकाशयति, तदा नीचजनानां भगवत्समीपागमने भीतिः स्यादिति कृत्वा सर्वदा सौशील्यगुणाधिकृतो भगवान् सर्वशक्तित्वादीन् स्वगुणान् छित्त्वा भक्तचित्तं रञ्जयति। भावितोत्पादिता धीर्येण सो भावितधीः। सौशील्ये भावितधीः सौशील्यभावितधीः। एवं सौशील्यभावितधीया त्वदीयान् गुणान् संछिनत्ति भगवान् परमेश्वरः। इतरेषां भक्तानां सौशील्यगुणविशेष एव बुद्धिर्यथोत्पद्येत तथावस्थितो भगवान्। "यदि सन्ति गुणाः"[2] इति न्यायात् सामान्यजनेऽपि विद्यमानस्य गुणस्य प्रकाशोऽवश्यम्भावी। तर्हि विश्वव्यापकस्य सर्वशक्त्युपेतस्य कथं गुणाच्छादनमिति तु भगवतो माहात्म्यमेव। तव सन्निकृष्टाः समीपवर्तिनो ये प्रीतिविषयाः सन्ति, तादृशाः साधका महापुरुषा विशुद्धहृदया भगवति निरतिशयप्रेमशालिनः शमवन्तः प्रसन्नेन चित्तेन यथा व्यवस्थितं भगवन्तं तथैवाविकलं साक्षात्कुर्वन्ति। अर्थाद्यथा सूर्यावरकमेघमण्डलोपरि सन्निकृष्टा मेघावरणकालेऽपि सूर्यप्रभां

[1]वरदराजपञ्चाशत् २७

[2]सायणस्य सुभाषितसुधानिधौ २/१२१/१३

साक्षात्कुर्वन्ति। तथैव भगवदनर्चनासमाधिरूपमावरणमतीत्य स्थिता महापुरुषा भगवद्दर्शनं कुर्वन्तीत्याशयः।

**ख. अर्चावतारनिर्माणम्**

पूर्वमुक्तमुपासकाभिमतसुवर्णादिनिर्मितो मूर्तिविशेषो विग्रहविशेषो वार्चावतारः। तर्हि प्रश्न उत्थाप्यते यत् केनोपायेनार्चावतारस्य विग्रहविशेषो निर्मितो भवति। तदा सम्प्रदायसिद्धानि नानाविधानि मतानि प्रमाणत्वेनागच्छति। यथा स्कन्दपुराणे -

"रत्नजा हेमजा चैव राजती ताम्रजा तथा।
रैतिकी वा तथा लौही शैलजा द्रुमजा तथा॥
अधमाधमा विज्ञेया मृन्मयी प्रतिमा च या।
सर्वकामप्रजा चैव रत्नजा चोत्तमात्तमा॥" इति

काश्यपो वदति -

"यार्चा मृद्दारुमभूता सायुःश्रीबलदा मता।
सौर्वणी पुष्टिदा ज्ञेया ताम्रजा जनवर्धिनी।
महत्करोति भूलाभं यार्चा पाषाणनिर्मिता॥" इति

प्रतिमाद्रव्यतन्निर्माणप्रतिष्ठापूजाफलादिकं मत्स्यपुराणे पद्मपुराणे भविष्यपुराणे ब्राह्म-पुराणेऽग्निपुराणे च बहुत्र विस्तरेणोपलभ्यते।

**ग. अर्चावतारपूजनम्**

यथासामर्थ्यं भगवदाराधका उपास्यमुपासते। भक्तिरेव तत्र प्रथमं मुख्यमुपादानम्। गीतायां स्वयं भगवान् वदति -

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥"[1] इति

आसनं पाद्यं अर्घ्यं आचमनीयं स्नानीयं वस्त्रमाभरणं गन्धः पुष्पं विल्वपत्रं/तुलसीपत्रं धूपो दीपो नैवेद्यं पुनराचमनीयं ताम्बूलञ्चेत्युपचारैरर्चका भगवन्तं पूजयन्ति। क्वापि पञ्चोपचारः,

[1]श्रीमद्भगवद्गीता ९/२६

क्वापि दशोपचारः, कुत्रापि वा षोडशोपचारः प्रसिद्धः। आदौ परमात्मन्यर्चावतारे श्रद्धाभक्ती स्थापनीये। तत ईश्वरानुग्रहः।

नित्यमर्चारूपिणो भगवतः समाराधनं कर्तव्यम्, अकरणे च प्रत्यवायः। हर्याराधनापेक्षया पुण्यं किमपि वैदिकं कर्म न विद्यत इति कुर्मपुराणम्[1]। कथं विष्णुसेवा कर्तव्येति चेदुच्यते मनुना -

"स्नात्वा नित्यं शुचिः कुर्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनं चैव समिदाधानमेव च॥" इति

याज्ञवल्क्यो वदति - "स्नात्वा देवान् पितृंश्चैव तर्पयेदर्चयेत्तथा" इति। विज्ञानेश्वरवचनादपि विष्णुपूजनपद्धतिर्ज्ञायते। यथा - "मध्याह्ने तर्पणानन्तरं गन्धकुसुमाक्षतैर्हरिहरहिरण्यगर्भ-प्रभृतीनामन्यतमं यथावासनम् ऋग्यजुःसाममन्त्रैस्तत्प्रकाशकैः स्वनामभिर्वा चतुर्थ्यन्तैः नमस्कारयुक्तैराराधयेत्" इति विज्ञानेश्वरः।

**अर्चावतारे सम्प्रदायसिद्धानि तथ्यप्रमाणानि**

अर्चावतारतत्स्थापननिर्माणमाहात्म्यज्ञापनाय बहूनि प्रमाणानि सन्त्येव। अत्र कतिपयानां विशिष्टाद्वैतसम्प्रदायसिद्धानां प्रमाणानामुल्लेखः क्रियते। यथा - "बिम्बाकृत्या आत्मना बिम्बे समागत्यावतिष्ठते" इति सात्वतसंहिता। आराधकैर्यथारुचि सुवर्णरजतादि-निर्मितायां प्रतिमायां नीरक्षीरवदविभागेन प्राकृताप्राकृतसंशयं परित्यज्य भक्तिः प्रदर्श्यते। "दैवादिष्वपि विशिष्टप्रतिष्ठानन्तरं प्रसादोन्मुखेश्वरसंकल्पाधीनमप्राकृतत्वमनुसंधेयम्" इति न्यायसिद्धाञ्जने श्रीमदाचार्या अभिप्रयन्ति। किञ्च भगवच्छास्त्रे -

"अर्चकस्य तपोयोगात्पूजायाश्चातिशायनात्।
आभिरूप्याच्च बिम्बस्य नित्यं सन्निहितो हरिः॥" इति

परव्यूदाहिवदर्चापि षाड्गुण्यप्रकाशकशुद्धसत्त्वमयी। उच्यते च -

"अर्चापि लौकिकी या सा भगवद्भावितात्मनाम्।

---

[1]"न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्।
तस्मादनाधिमध्यान्तं नित्यमाराधयेद्धरिम्॥" इति।

 ISSN : 2277-2359

मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहा॥"[1] इति

महानारायणोपनिषदि एकस्मिन् मन्त्र एवेश्वरस्य पर-व्यूह-विभव-अन्तर्यामि-अर्चाः चेति पञ्च अवताराः प्रदर्शिताः। मन्त्रश्च -

"अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।

शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः॥"[2] इति

मन्त्रे "नाकस्य पृष्ठे" इत्यनेन परः प्रदर्शितः। "अम्भस्यपारे" इत्यनेन पद्मनाभो नाम व्यूहः प्रतिपादितः। "भुवनस्य मध्ये" इत्यनेन सूर्यमण्डलान्तर्वर्ती विभवः परामृष्टः। "प्रजापतिः चरति गर्भे अन्तः" इत्यनेन अन्तर्यामी बोधितः। "शुक्रेण ज्योतींषि समनुप्रविष्टः" इत्यनेन अर्चा ज्ञायते। अर्चावतार इतोऽपि नैकानि वैदिकानि लौकिकानि तथ्यप्रमाणानि तु नितरां विलसन्ति। तान्यन्वेषणीयानि।

**अर्चावतारमाहात्म्यम्**

अप्राकृतो भगवान् शुद्धसत्त्वेनास्त्राभूषणादिविचित्रतत्त्वाश्रयेण दिव्यमङ्गलविग्रहेण विशिष्टः सन् परादिभिः पञ्चभिः प्रकारैर्विभज्यते। विष्वक्सेनसंहितावचनानुसारम् -

"मम प्रकारा पञ्चेति प्राहुर्वेदान्तपारगाः।

परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥" इति

"अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।

इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः॥" इति

अयमर्चावतार एव सर्वोत्तर इति विदुषां निष्कर्षः। सत्यज्ञानानन्दस्वरूपापेक्षया विग्रहस्याराधनमधिकं सौलभ्यं सुखकरञ्च। तस्मादर्चावतार आराधकाभिमतसर्वदेशकाल-सम्बन्धात् परादिभ्योऽधिकतमः। विभवविशेषवैलक्षण्येन परित्यक्तदेशकालाधिकारि-नियमेनार्चकाधीनेन च तस्य स्थितिः। अशेषलोकशरण्यत्वं रुचिजनकत्वं शुभाश्रयत्वम् अनुभाव्यत्वं भक्तोपलभ्यत्वञ्चेति सर्वमर्चायां परिपूर्णम्। स्वस्वामिभावं परित्यज्यास्वतन्त्र

---

[1]लक्ष्मीतन्त्रम् २/५९

[2]महानारायणोपनिषत् १/१

 ISSN : 2277-2359

इव, अज्ञ इव, अशक्त इव दयालुरपारकारुण्यपरवशो भवभयं हरति, अपेक्षितं सर्वं ददाति। दिव्यसूरिभिः स्वकृतिषु बहुत्रार्चावतार एव प्रणम्यते। अर्चावतारे सर्वे गुणाः फलदायकाः। यथा घनान्धकारे दिग्भ्रान्ता वयं दीपमन्विषामः, तथैव भक्ताः प्रपन्ना अर्चावतार एव दीपं पश्यन्ति। महतीं स्वकीयां पूर्णतां त्यक्त्वा स्वातन्त्र्यञ्च परिहृत्य स्वभक्तान् स्वयमाद्रीयतेऽयम्। अवतारस्यास्य सौलभ्यमितोऽपि वैखानसप्रक्रियाधिकारवचने द्रष्टुं शक्नुमः। यथा -

"चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च। प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरिः।
तस्मात्त्रयाणामेतेषां वेरपूजा विशिष्यते॥" इति

यद्यपि परव्यूहादिषु सौलभ्ये सत्यपि तस्य विश्रान्तिभूमिरर्चायामेव। उच्यते -

"एवं पञ्चप्रकारोऽहमात्मनां पततामधः।
पूर्वस्मादपि पूर्वस्माज्ज्यायांश्चैवोत्तरोत्तरः।
सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः॥"[1] इति

भक्ता यादृशरूपादिविशिष्टतया भगवन्तमुपासितुं वाञ्छन्ति, तादृशं रूपं स्वयं परिगृह्य भक्ताभिमतं साधयत्यर्चावतारः। अर्चारूपी भगवान् स्वयं प्राप्तसर्वकामः सन्नपि भक्तैर्भक्त्या दीयमानं पत्रपुष्पफलतोयं स्वीकृत्य तृप्यति। सः स्वतन्त्रोऽप्यस्वतन्त्र इव, सर्वशक्तिः जगद्धाताप्यशक्त इव चेष्टते, सर्वकामप्रदोऽपि अशक्त इव लक्ष्यते, अपराधानभिज्ञः सन् सदैव दयां कुरुते। अर्चावतारस्य दर्शनेन चेतनानां पापादीनि नश्यन्ते। स्मर्यते च -

"आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम्।
पातकान्याशु नश्यन्ति किं पुनस्तूपपातकम्॥"[2] इति

अर्चावतारस्य दर्शनेनैव पुंसां कुवासना कुबुद्धिः कुतर्कः कुसिद्धान्तः कुहेतुः कुभावः चेति सर्वविधमज्ञानकारकं लयं प्राप्नोतीति श्रीपौष्करेऽर्चावतारप्रकरणे प्रदर्शितम्।

"संदर्शनादकस्माच्च पुंसां संमूढचेतसाम्।

---

[1]वैखानसगृह्यसूत्रम्

[2]सात्वतसंहिता १६/१० - व्याख्याने

कुवासना कुबुद्धिश्च कुतर्कश्च कुनिश्चयः।

कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत्॥"[1] इति

अर्चावतारस्य निर्यासं विना मोक्षः प्रायः असम्भवः। सुवर्णरजतादिभिर्विनिर्मितां विष्णोः सुरूपां प्रतिमामर्चयेत् प्रणमेद्यजेद्विचिन्तयेच्च। तेनैव दोषप्रशमनम्। ततो मोक्षसाधनम्। उक्तञ्च शौनकेन -

"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम्। कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः॥

तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत्। विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणाम्॥"

इति

अर्चावतारः सर्वेषां बान्धवो भक्तवत्सल इति वचनात् परमकारुणिकस्य सौलभ्यातिशयत्वं ध्वन्यते। येऽर्चावतारं केवलं प्रतिमां मन्यन्ते, ते नरकं गच्छन्तीति साक्षादुक्तं सम्प्रदाये -

"यो विष्णोः प्रतिमाकारे लोहबुद्धिं करोति च।

यो गुरौ मानुषं भावमुभौ नरकपातिनौ॥" इति

**पूर्वपूर्वादुत्तरोत्तरे सौलभ्यातिशयत्वप्रमाणम्**

पूर्वपूर्वादुत्तरोत्तरेऽवतारे सौलभ्यं सचमत्कारं निदर्शयति श्रीवचनभूषणकारः। यथा - "भूगतजलमिव अन्तर्यामित्वम्, आवरणजलवत् परत्वम्, क्षीराब्धिना तुल्यो व्यूहः, वशिकतटिन्य इव विभवाः, तत्प्रवाहजा ह्रदा इव अर्चावतारः" इति।

i. अत्र पर आवरणजलेन सूचितः। यथाण्डान्निर्गतं जलं तृषितस्योपयोगाय न भवति। तथैव लीलाविभूतेः परस्ताद्विद्यमानं परत्वं साधारणैर्जनैर्नानुभूयते।

ii. क्षीराब्धिना व्यूहः तुल्यः। यथा क्षीरसमुद्रं दुष्प्रापं, तथैव दर्शनाविषयः श्रूयमाणो व्यूहः।

iii. विभवो वशिकतटिनीभिः परामृश्यते। यथा प्रत्यासन्ना वशिकतटिन्यः प्रवाहकाले विद्यमानान् उपजीवयन्ति, न पश्चात्तनान्। तथैव भूमाववतीर्य समकालिनामेवाश्रयणार्हाः पश्चाद्भवानां दुर्लभा विभवाः।

---

[1]श्रीपौष्करे अर्चावतारप्रकरणे

 ISSN : 2277-2359

iv. अन्तर्यामी भूगर्भजलेन तुल्यः। यथा तृषितस्य जनस्य भूगतं जलं प्रत्यसन्नमपि, खननादिकं विना तत् प्राप्तुमशक्यम्। तज्जलमस्माकं दृष्टिपथं नावतरति। तथैव मुमुक्षोर्हृदयस्थितोऽन्तर्यामी दृष्टिपथं नावतरति।

v. पूर्वोक्तविलक्षणाः तटिनीप्रवाहजा ह्रदा यथा पिबतां श्रममपनयन्तः पश्चाद्भाविनामप्युपयोगाय भवन्ति। तथैवालयेषु गृहेषु च स्थितः साक्षात् सेव्यमानो भाविनामपि चेतनानामुपजीव्योऽर्चावतार इति अर्चावतारमाहात्म्यं तु स्पष्टमेवावगम्यते।

**प्रसिद्धाः अर्चावताराः**

विशिष्टाद्वैतसम्प्रदाये भक्तिमार्गानुसारं द्वादशानां तामिळसतामाळवारपुरुषाणां महायोगिनां परिचयः प्राप्यते। ते च पोय्गै आळवार, भूतत्ताळवार, पैयाळवार, तिरुमालिसै आळवार, नम्मालवार, मधुरकवि आळवार, कुलशेखराळवार, पेरियाळवार, आण्डाल, तोण्डरडिप्पोडियाळवार, तिरुमंगैयाळावर चेति। भक्तिमार्गप्रचाराय ते तामिळभाषायां प्रायः चतुःसहस्रं पद्यानि व्यरचयन्। तेषां संकलनमेव दिव्यप्रबन्धः, द्राविडवेदो वेति नाम्ना प्रख्यातम्। तेषामाळवारसिद्धान्तानां पूर्णता रामानुजवेदान्त-देशिकादिभिर्विरचितेषु ग्रन्थादिषु प्राप्ता सुरक्षिता च। तैराभारतं भगवतो विष्णोरष्टोत्तरशतं मन्दिराणि भ्रमितानि। तान्यष्टोत्तरशतं मन्दिराणि दिव्यदेशमित्यभिधानेन प्रसिद्धानि। तेषु केवलं भारते पञ्चोत्तरशतं प्राप्यन्ते, नेपाले एकं, पुनर्द्वयोरवस्थानं न सुस्पष्टम्। भारतेऽवस्थितेषु पञ्चोत्तरशतसंख्यकेषु तामिळनाडुराज्ये चतुरशीतिः, केरले एकादश, अन्ध्रप्रदेशे द्वे, गुजराते एकम्, उत्तरप्रदेशे चत्वारि, उत्तराखण्डे च त्रयं दृश्यन्ते। तत्र तत्र स्थानेषु भगवान् पुरुषोत्तमो नारायणो धृतार्चावतारो भक्तैः पूजितो भवति। एते सर्वे दिव्या भव्या अर्चावताराः पौराणिकतत्त्वेन प्रमाणिताः, वेदान्तदेशिकादिभिः प्रख्यातैर्भक्तिभाव-समर्थकैर्विशिष्टाद्वैतवादिभिः स्वकृतिषु वन्दिताः पूजिताश्च वर्तन्ते। तेषु कतिपयानां पौराणिकमैतिहासिकञ्च तथ्यं विना केवलं सामान्यं विवरणमधः प्रदास्यते -

 ISSN : 2277-2359

i. श्रीविजयराघवमन्दिरम् (Vijayaraghava Perumal Temple, Kanchipuram): तामिलनाडुराज्यस्य काञ्चीपुरम्-मण्डले स्थितेयमर्चा। वेदान्ददेशिकैः परमार्थस्तुतिग्रन्थे विजयराघवः स्तुतः।

ii. श्री-अष्टभुजमन्दिरम् (Ashthabujakaram/Ashtabuja Perumal Temple, Kanchipuram): इदं मन्दिरमपि तामिलनाडुराज्यस्य काञ्चीपुरम्-मण्डले स्थितम्। वेदान्तदेशिकस्य श्री-अष्टभुजाष्टकम् इति ग्रन्थे भगवान् विष्णुरष्टभुजत्वेन निर्दिष्टः।

iii. श्रीयथोक्तकारिमन्दिरम् (Tiruvekkaa Temple/ Yathothkari Perumal Temple, Kanchipuram): काञ्चीपुरमे स्थिताया अस्या अर्चायाः पूर्णं विवरणं वेदान्तदेशिकस्य श्रीवेगासेतुस्तोत्रे प्राप्यते।

iv. श्रीदीपप्रकाशमन्दिरम् (Tiruththanka/Deepaprakasa Perumal Temple, Kanchipuram): काञ्चीपुरमे स्थितस्य भगवतोऽर्चावतारो वेदान्तदेशिकस्य शरणागतिगद्यमित्याख्ये ग्रन्थे विस्तृतः।

v. श्रीनरसिंहमन्दिरम् (Tiruvelukkai Temple, Kanchipuram): इदमपि काञ्चीपुरमे अवस्थितम्। वेदान्तदेशिकः स्वीये कामासिकाष्टके श्रीनरसिंहः कामप्रदातृत्वेन वर्णितः।

vi. तिरुपतिवेङ्कटेशमन्दिरम् (Venkatesawara Temple, Tirupati): अन्ध्रप्रदेशस्य तिरुपतिनगरे स्थितोऽयं सप्तगिर्यधिष्ठाता वेङ्कटेशः। वेदान्तदेशिकेन दयाशतकमिति ग्रन्थेऽस्य विस्तृतं विवरणमुपन्यस्तम्।

vii. रङ्गनाथस्वामिमन्दिरम् (Ranganathaswamy Temple, Srirangam): कर्नाटकराज्यस्य श्रीरङ्गपत्तमे प्रतिष्ठितमिदं मन्दिरम्। तत्र भगवान् रङ्गनाथः सहस्रेण पद्यैः स्तुतो वेदान्तदेशिकेन पादुकासहस्रमिति ग्रन्थे।

viii. वरदराजमन्दिरम् (Varadharaja Perumal Temple, Kanchipuram): अयं वरदराजो वेदान्तदेशिकेन विरचितस्य वरदराजपञ्चाशदिति ग्रन्थे वन्दितः।

## उपसंहारः

एवं भगवतो विष्णोः परव्यूहविभवान्तर्यामिभेदविशेषं प्रतिपाद्यार्चावतारतत्स्वरूपं नानाविधप्रमाणपुरःसरं प्रतिमापूजनस्य बुद्धनिर्वाणापेक्षयार्वाचीनत्वखण्डनपूर्वकं वेदप्रतिपाद्यत्वम्, अर्चानिर्माणम्, अर्चापूजनम्, अर्चामाहात्म्यं, प्रसिद्धानां कतिपयानामर्चानां विवरणञ्च प्रकृतलेखे यथामति प्रस्तुतम्। "सर्वोपरि केशवाराधनं हित्वा नैव याति परां गतिम्" इति महाभारतवचनात् मोक्षमार्गे विष्णोरर्चावताराराधनस्य प्रयोजनीयता च सुतरां दृश्यत एव। न केवलमर्चावतारपूजनेन परमा गतिः प्राप्यते, अपि तु तत्तदर्चावतारस्थानमाहात्म्यज्ञानेन गौरवान्विता श्रद्धाबहुला भारतीयसंस्कृतिराध्यात्मिकपरम्परा च संरक्षिता स्यात्। अन्तिमे पुराणवचनं च स्मर्यते -

"आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥"[1] इति

## आश्रितग्रन्थसूची

१. द्विवेदी, आचार्यः शिवप्रसादः (व्याख्याता)। यतीन्द्रमतदीपिका (हिन्द्यनुवादेन भावप्रकाशिकया च समन्विता)। चौखम्बा सुरभारती ग्रन्थमाला १६०। वाराणसी। चौखम्बा सुरभारती प्रकाशन, २००९।

२. शास्त्री, देवर्षि कालानाथ (सम्पादकः)। विशिष्टाद्वैतसिद्धान्तः (सूत्रकारिकात्मकः श्रीविश्वनाथशास्तिदातारकृतभाष्यसहितः)। रेवासा। श्रीजानकीनाथ बडा मन्दिर ट्रस्ट, २००३।

३. शर्मा, डाँ. उमाशङ्कर (भाष्यकारः)। सर्वदर्शनसंग्रहः (विद्याभवन संस्कृत ग्रन्थमाला ११३)। वाराणसी। चौखम्बा विद्याभवन, २०१९।

४. Annangaracharyar, Sri Kanchi P.B (सम्पादकः)। श्रीवेदान्तदेशिकग्रन्थमाला। कञ्चीभरम्। माद्रास लिवर्टी मुद्रणालयः, १९४०।

५. उपाध्याय, श्री बलदेव (सम्पादक)। संस्कृत वाङ्मय का बृहत् इतिहास (दशम खण्ड, वेदान्तः)। उत्तरप्रदेशसंस्कृतसंस्थानम्, १९९६।

[1] लिङ्गपुराणम् (उत्तरभागः ७/११)

६. तर्करत्नः, आचार्यः पञ्चाननः (सम्पादकः)। विष्णुपुराणम्। कोलकाता। नवभारत पावलिशार्स, १३९० बङ्गाब्दः।

७. घोषः, श्री राजेन्द्रनाथ (सम्पादकः)। वेदान्त दर्शनेर इतिहास - प्रथम, द्वितीय, तृतीय भाग। वरिशाल। शङ्करमठ, १३३२ बङ्गाब्दः।

८. Nakamura, Hajime. A History of Early Vedanta Philosophy (in two parts). Delhi: Motilal Banarasidas, 2004.

९. कृष्णमाचार्यः, गयंपेट्टै। अर्चावतारवैभवम्। कुम्भकोणम्। श्रीकृष्णविलास मुद्रालयः। १९२१।

# अलङ्कारशास्त्रदिशा रससङ्ख्याविचारः

**प्रलय-नन्दी**

शोधच्छात्रः, संस्कृतदर्शनविभागः

रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानम्

वेलुडमठम्, हावडा

**कुञ्चिकापदानि**

स्थायिभावः, व्यभिचारिभावः, रसः, आस्वादः।

**प्रबन्धसारः**

अलङ्कारशास्त्रे रसा नव इत्येव सिद्धान्तः। परन्तु बहुत्र भक्ति-वत्सलादीनाम् अतिरिक्तरसत्वं प्रतिपादितं दृश्यते। प्रस्तुते प्रबन्धे तत्तन्मतानां विमर्शोपस्थापनपुरःसरं रससङ्ख्याविषये विस्तृतो विचार उपस्थापितो वर्तते।

**उपोद्घातः**

काव्यस्य काव्यशास्त्रस्य च परमोत्कृष्टं फलं भवति रसः। यथा सर्वेषां प्राणिनां सर्वं कार्यम् आनन्दे पर्यवस्यति तथा काव्येऽपि सर्वे विषया रसे पर्यवस्यन्ति। न हि रसादृते कश्चिदर्थः प्रवर्तते इति मुनिवचनात् गीतनृत्यादीनां सर्वेषामपि कलाप्रकाराणां रस एव आत्मेति अवगम्यते। कोऽयं रस इति जिज्ञासायां स्वयं भरतमुनिः कथयति – "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि"ति। विभावः, अनुभावो व्यभिचारी एतेषां संयोगे सति रसनिष्पत्तिरित्याशयः। विभाव्यते लोकोत्तरत्वेन सहृदयहृदये आस्वादयोग्यः क्रियते स्थायिभावो येन तादृशः काव्येन नाट्येन वा समर्पितो रामसीताप्रभृतिः मेघपर्वतसमुद्रप्रभृतिर्वा पदार्थो विभाव इत्युच्यते। विभावगतकटाक्षविक्षेपादिचेष्टाविशेषः अनुभावः। व्यभिचरति अस्थिरतया तिष्ठति इति लज्जासंशयकुतूहलादिः व्यभिचारिभावः। एवंविधोत्पत्तिशाली एव रसः, अथवा आस्वादो रसः। विभावादीनां समुचिते संयोगे जाते सहृदयानां चेतसि यः अलौकिक आनन्दः अभिव्यक्तो भवति स रस इति भावः। तत्र

स्थायिभावो रसात्मना तिष्ठति। रत्यादिः स्थायी भावः अभिव्यक्तः सन् रस इत्यभिधीयते, तदुक्तं -

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः[1]।" इति।

कोऽयं स्थायिभाव इति चेत् अनादिवासनारूपेण सहृदयानां मनसि स्थितो रतिहासशोकप्रभृतयो भावाः, तेषां रसत्वप्राप्तिपर्यन्तस्थिरत्वात् ते स्थायिनः। काव्यमार्गेण लोकोत्तरतया एतेषाम् अनुभव एव श्रृङ्गारकरुणादिरूपेण परमास्वादो रसो भवति। स्थायिभावा नव, तदुच्यते -

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च[2]॥"इति।

तथा च पूर्वोक्तरीत्या नवैव रसाः सम्भवन्ति, ते च -

"श्रृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा पुनः[3]॥" इति।

एतदतिरिक्ताः भक्तिरसः, वात्सल्यरसः, लौल्यरसः, कार्पण्यरसः इत्यादयो ये रसत्वेन प्रतिपादितास्तेषां सर्वेषामपि एषु नवस्वेव अन्तर्भावः सिद्धान्तितः।

**रससङ्ख्या**

अथ संस्कृतालङ्कारशास्त्रे रससङ्ख्याविषये मतभेदा दृश्यन्ते। मुनिमते अष्टौ रसाः, रूपगोस्वामिमते प्रेमादयः षोडशप्रकारा रसाः, दशप्रकारा रसा इति विश्वनाथो भोजराजश्च प्रतिपादयन्ति। भरतमुनित आरभ्य पण्डितराजजगन्नाथं यावत् विद्वत्सम्प्रदाये नव रसा इत्येव सिद्धान्तः। अत एवोक्तं नाट्यशास्त्रे एवमेते रसा ज्ञेया नव लक्षणलक्षिताः। इति। यद्यप्यत्र एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः इति पाठभेदो दृश्यते तथापि "ये पुनर्नव रसा इति पठन्ति" - इति ग्रन्थारम्भेण ज्ञायते यद्रसानां नवसङ्ख्याकत्वमित्यपि कश्चन पक्षो विद्यत इति। अत्र वस्तुत एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः - इति पाठ एव शुद्धः।

---

[1]काव्यप्रकाशः ३/२।

[2]साहित्यदर्पणः ३/१७५।

[3]साहित्यदर्पणः ३/७६।

 ISSN : 2277-2359

"रसा ज्ञेया नवे"ति पाठस्तु "एवमेते रसा ज्ञेया नवे"त्यभिनवभारत्यनुरोधेन। भरतमुनिना ब्रह्मोक्तमतम् अनुसृत्य रसानाम् अष्टविधत्वमेव स्वीकृतम्, अत एव षष्ठाध्यायस्य प्रारम्भ उच्यते –"अष्टौ नाट्यरसाः स्मृता" इति। एवं तर्हि रसानां नवविधत्वस्य का गतिरिति चेद् नाट्ये अष्टावेव रसाः, तत्र न कापि विप्रतिपत्तिः। परन्तु काव्यमार्गे नव रसाः सिद्धान्तिताः। तत्र पुरुषार्थोपयोगित्वात् रञ्जनाधिक्येन वा नवैव रसा इत्यभिनवगुप्तपादैर्व्याख्यातम्। अत्रायं विशेषो यद् भरतमुनिनापि रसानां नवविधत्वमेव स्वीकृतम्, परन्तु नवमस्य शान्तरसस्य अभिनयोपयोगित्वाभावात् नाट्यशास्त्रेऽस्योपन्यासो न कृतः। अन्यथा रसाध्यायस्य अन्ते शमस्थायिभावात्मकस्य मोक्षप्रवर्तकस्य च शान्तरसस्य उपन्यासो न युज्येत। एवं काव्यशास्त्रदिशा नवैव रसाः। एतेभ्योऽतिरक्तत्वेन येषामाक्षेपो दृश्यते तेषामपि रसान्तराणाम् एतेषु नवस्वेव अन्तर्भाव इति निर्णीतिः। सम्प्रति भक्त्यादीनामतिरिक्तरसानां विषये एको विचार उपस्थाप्यते।

**भक्तिरसः**

सेवार्थकाद्भज्-धातोः क्तिन्-प्रत्यये भक्तिशब्दो निष्पन्नः। तदुच्यते -

"भज इत्येष वै धातुः सेवायां परिकीर्तितः।

तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी[1]॥"इति।

अयञ्च भक्तिरसो भगवदालम्बनो रोमाञ्चाश्रुपाताद्यनुभावितो हर्षादिसञ्चारितश्च। वैष्णवधर्माचार्याः श्रीमद्रूपगौस्वामिपादा अस्य सम्प्रदायस्य प्रधानाचार्यो मन्यते।श्रीभक्तिरसामृतसिन्धुः, उज्ज्वलनीलमणिश्चेति तत्प्रणीतं ग्रन्थद्वयमत्र प्रधानं प्रमाणम्। भक्तिरसस्य वास्तविकी सिद्धिः भक्तिशास्त्रे दृश्यते, न तु काव्यशास्त्रे। अस्य मुख्यतया श्रीमद्भगवद्गीतायां, भागवतेच वर्णनं[2] प्राप्यते। भागवतादिपुराणश्रवणसमये

[1]गरुडपुराणम् – ०१.२२७.०३।

[2]श्रीमद्भागवते नवधा भक्तिरुच्यते -"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥"(श्रीमद्भागवतम् - ०७.०५.२३)।शाण्डिल्यभक्तिसूत्रे -"सा परानुरक्तिरीश्वरे"( ०१.०१.०२)। नारदभक्तिसूत्रे -"सा त्वस्मिन् परमप्रेमरूपा" (०१.०१.०२)तथा भक्तिरसायने "द्रुतस्य

भगवद्भक्तैरयं सम्यगनुभूयते। भक्तिरसे देवादिविषयकरतिः स्थायिभावो भवति। भक्तिरसं समर्थयद्भिः परम्परागतरसानामपेक्षया भक्तिरसस्य श्रेष्ठत्वं प्रतिपादितम्, कैश्चिच्च भक्तिशान्तयोरभेदो व्याख्यातः। अपरैश्चास्य आलौकिकत्वं संसाध्य सर्वेषां रसानामस्मिन् समावेशः सिद्धान्तितः। भक्तिः केवलो रसः, इतरे शृङ्गारादयो भक्तेरङ्गभूताः रसाभासमात्रं वा इति तत्र सिद्धान्तः।

परन्तु भरतमुनित आरभ्य पण्डितराजजगन्नाथं यावत् केनापि काव्याचार्येणास्या भक्ते रसत्वेन वर्णनं न कृतम्। मुनिवचनमुल्लङ्घ्य प्रसिद्धारसातिरक्तं वत्सलरसं प्रतिपादयतापि विश्वनाथाचार्येणास्य भक्तिरसस्य विषये किमपि नाभिव्यक्तम्।नाट्यशास्त्रस्यप्रसिद्धो व्याख्याता आचार्योऽभिनवगुप्तः रससिद्धान्तं विस्तारयन् शान्तरसस्य नवमरसत्वम् आख्यातवान्। परन्तु तेभ्योऽतिरिक्तस्य कस्यचिद्रसस्य स्वतन्त्रा स्थितिर्न स्वीकृता। तत्र स्नेहादीनाम् इतररसानाम् एषु नवसु रसेषु एव अन्तर्भावः सम्भावितः, तदनु –"एवं भक्तावपि वाच्यमि[1]"ति वचनेन भक्तेरपि तेषु नवस्वेव अन्तर्भावो व्याख्यातः।

१. भक्तेर्वस्तुतो रसत्वमेव नोपपद्यते। यतो ह्यत्र विभावाः उपलभ्यन्ते, व्यभिचारिभावा अपि सम्भवन्ति, परन्तु विभावगतव्यापारः अर्थाद् अनुभावो नास्ति। यथा वागर्थाविवेत्यादिश्लोके पार्वतीपरमेश्वरयोः वन्दनं विधीयते, तत्र तद्गतव्यापारः कोऽपि न वर्ण्यते। सर्वेष्वपि स्तोत्रादिषु एवमेव दृश्यते, तत्र क्वापि अनुभावो नास्ति। अतो रससूत्रस्य असङ्गतेः अत्र भक्तौ रसत्वं न सिध्यति।

२. भक्तिरसस्य रतिभावेऽन्तर्भावः, भक्तिर्वस्तुतो रतिभावः। तदुक्तं काव्यप्रकाशे - "रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः[2]..."इति। विभावादिभिः प्राधान्येनाञ्जितो व्यञ्जितो वा स्थायिभावो व्यभिचारी उच्यते, स च भावः प्रोक्तः। अर्थाद्

---

भगवद्धर्माद्धारावाहिकतां गता। सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते"॥ इति।(भक्तिरसायनम्, कारिका - ०१.०३)।

[1]नाट्यशास्त्रम्, पत्राङ्कः – २३१।

[2]काव्यप्रकाशः, कारिका – ४३।

यथा विभावादिभिरभिव्यक्तो रत्यादिश्चिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते तथा स्वकार्यकारणाभ्यामभिव्यक्तो देवादिविषयकरत्यादिः चिदानन्दरूपताम् आपन्नो भावत्वं प्राप्नोति। परन्तु रसत्वमापन्ने रतिभावे चमत्कारसत्त्वम्, भावत्वमापन्ने च रतिस्थायिभावे चमत्कारासत्त्वम् इति चमत्कारसत्त्वासत्त्वाभ्यामनयोः भेदः। रसः, भावो, रसाभासो, भावाभासो, भावप्रशमो, भावोदयो, भावसन्धिर्भावशबलतेति अष्टानां रसनाद् आनन्दसंवलितज्ञानसम्बन्धात् तद्रूपसादृश्याच्च रसत्वेन व्यवहारो भवति, परन्तु अयं व्यवहारो सामान्यतो भवति, रसे एव प्राधान्येनायं व्यवहार इति ध्येयम्। प्राधान्येन व्यञ्जिता अप्राप्तरसावस्थाः स्थायिभावा भावा इति भावः, अस्यामवस्थायामेतेषां स्थायित्वं न तिष्ठति अपि तु भावमात्रमवशिष्यत इति विशेषः। तत्सङ्गृह्यते -

"रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथ वा।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक्[1]॥" इति।

कान्ताविषया रतिः परिपुष्टा चेत्तस्या श्रृङ्गाररसत्वेन व्यवहारः, यदा त्वस्या अपरिपुष्टता तदा रतिभावत्वेन व्यवहारः। अतः श्रृङ्गारस्थायिभावो रतिः, तथा भावाभासादयो भेदाः श्रृङ्गाराभिव्यक्तौ व्यभिचारिभावाः। तत्र रतिभावात्मके व्यभिचारिभावभेदे भक्तेरन्तर्भावः। एवञ्च देवादिविषयकरतित्वेन भावान्तर्गतत्वाद् भक्तेः रसत्वव्यपदेशो न सम्भवति।

३. भक्तेः करुणारसेऽन्तर्भाव इति केचन। तथाहि रसत्वेनोपन्यस्ता भक्तिः रतिमूलस्वभावा एव। रतिरेव तत्र स्थायिभावः। रतौ अनुरागे च कारुण्यमेव प्रधानं कारणम्, कारुण्यं विना अनुरागस्यानुत्पत्तेः। अत एव भक्तेश्चरमसीमा सम्प्राप्ता भक्ता हसन्ति, नृत्यन्ति, रुदन्ति, अश्रुधारां प्रवाहयन्ति च। तस्मादनुरागस्वरूपा रतिः स्थायिभावः सञ्जातः, भक्तिश्च सर्वथा करुणामूलिका एव सिद्धान्तिता। एतच्च "एको रसः करुण एव निमित्तभेदादन्यः पृथक् पृथगिवाश्रयते विवर्तान्..." इति भवभूतेर्मतमनुसृत्य प्रतिपाद्यते। परन्तु भक्तिरसे

---

[1]द्रष्टव्यम् - प्रकाशोपेतं *काव्यानुशासनम्*, पत्राङ्कः - २८७।

रतिस्थायिभावो दृश्यते, करुणरसे शोकस्थायिभावः। अतः स्थायिभावस्य औचित्याद् काव्यमार्गमनुसरता भक्तिरसस्य करुणरसेऽन्तर्भावः अनुचितः।

४. मोक्षोपयोगित्वाद् भक्तिः शान्तरसेऽप्यन्तर्भावयितुं शक्यते। नाट्ये शान्तरसस्य अभिनयाभावेऽपि अनुभवस्तु भवति, अतो मुनिना नाट्यशास्त्रस्य अन्ते शान्तरसः सङ्केतितः तदुक्तम् - "अथ शान्तो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः। स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैः समुत्पद्यत[1]" इति। अत्र भक्तेरन्तर्भावः। अयम्भावः – भक्तिः समान्यतो द्विविधा भवति, लौकिकी अलौकिकी च। अस्मदादीनां कादाचित्की भक्तिः लौकिकी, अवतारपुरुषेषु दृश्यमाना भक्तिरलौकिकी भवति। अलौकिकी भक्तिर्हि नित्यं तिष्ठति, तत्र कदाचिदस्ति कदाचिन्नास्तीति व्यभिचारो न दृश्यते। लौकिकी भक्तिः शृङ्गारे अथवा शान्ते अन्तर्भवति, अलौकिकी तु शान्ते एवान्तर्भवतीति विशेषः। अत्र अन्तर्भावो गौणीभवनम्।

वस्तुतस्तु, मोक्षोपयोगित्वाद् अलङ्कारशास्त्रे प्रतिपादितेभ्यो रसेभ्यो भक्तेः पृथगेव व्यवस्थापनमुचितम्। अस्मिन् लोके जनानां द्विविधो मार्गो लक्ष्यते, शास्त्रमार्गः काव्यमार्गश्च। तत्र भक्तिः आभ्यां सम्पूर्णतया पृथग् वर्तते, अत एव आनन्दवर्धनाचार्येणाप्युच्यते -

"या व्यापारवती रसान् रसयितुं काचित् कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम्[2]॥" इति।

एवमनया रीत्या भक्तेः रसेभ्यस्तथा सम्पूर्णकाव्यजगतः पृथग् व्यवस्थापनं दृश्यते। अपि च, श्रीरूपगोस्वाम्यादीन् कांश्चन विदुषः अतिरिच्य सर्वत्रापि भक्तिरसः इत्यत्र रसशब्दः किंपरक इति विषये विवादबाहुल्यमवलोक्यते। यथा - शाण्डिल्यसूत्रे वर्णिते भक्तिरसे रसो

---

[1]नाट्यशास्त्रम्, पत्राङ्कः – २०७।

[2]ध्वन्यालोकः, पत्राङ्कः – ५०८।

रागः अथवा श्रृङ्गारादिरस इत्यत्र टीकाकारा विवदन्ते। निम्बार्काचार्यो दशश्लोक्यां भक्तिरसं वर्णयति, तत्रापि टीकासु रसशब्दव्याख्यानं भिद्यते। उत्पलाचार्यः शिवस्तोत्रावल्यां बहुत्र भक्तिरसशब्दं प्रयुक्तवान् परन्तु तत्र रसशब्दस्य किं तात्पर्यमिति स्पष्टं नास्ति। एवमन्यत्रापि अन्वेषणीयम्[1]।

**वत्सलरसः**

भोजराजेन तथा विश्वनाथाचार्येण प्रधानतो वत्सलरसस्य स्वीकारः कृतः। भोजराजः अतिरिक्तं वत्सलरसं स्वीकृत्य दश रसान् प्रतिपादितवान्। विश्वनाथाचार्योऽपि चमत्कारातिशयेन वत्सलस्य रसत्वं व्याख्यातवान्। तन्मतेऽत्र वत्सलतारूपः स्थायिभावः, पुत्रादिः आलम्बनविभावः, तद्गतचेष्टा खेलनकूर्दनहास्यादिः उद्दीपनविभावः, हर्षाश्रुपातादिश्च अनुभावः, हर्षगर्वादिः सञ्चारिभावः।तथोक्तं - "स्फुटं चमत्कारितया वत्सलं च रसं विदुः[2]।" इति। विश्वनाथाचार्येणास्य उदाहरणं प्रदत्तम् –

"यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः[3]" ॥ इति।

परन्तु अत्र वात्सल्यलक्षणा रतिरेव प्रतीयते। अतो भक्तिवद् वत्सलस्यापि पृथग्रसत्वं न स्वीकरणीयम्। अत्र भावत्वेनैव गतार्थत्वं मन्तव्यम्। वत्सले स्थायिभावो रतिः, इयमेव श्रृङ्गारे स्थायिभावो वर्तते। परन्तु अत्र रतेर्विषयः मातृसन्तानौ। अतोऽत्र विषयभेदमात्रं विशेषः। एवं रतेर्विषयभेदेन यदि रसान्तरकल्पनम्, तर्हि रसानाम् आनन्त्यापत्तिरत्याशयः। अतो वत्सलोऽपि न रसान्तरम्।

---

[1]"द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः।" (शाण्डिल्यभक्तिसूत्रम् - ०१.०१.०६) इतिभक्तिसूत्रेभक्तिरस इत्यत्र रसशब्दस्य रागरूपार्थकत्वं निरूपितम्। अस्य व्याख्यायामुच्यते नारायणतीर्थेन -"सा भक्ती(<भक्तिः) रागरूपा। कुतो द्वेषप्रतिपक्षभावात्, द्वेषविरोधित्वात्" (शाण्डिल्यभक्तिसूत्रम्, पत्राङ्कः – ४८)।एवं "...रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते"इत्यत्र भगवच्छङ्कराचार्यो व्याख्याति - "...रसो रागो विषयेषु यः तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः स्वरसेन प्रवृत्तः रसिकः रसज्ञः इत्यादिदर्शनात्" इति।(श्रीमद्भगवद्गीता–०२. ५९, शाङ्करभाष्यम्)।

[2]साहित्यदर्पणः - ०३.२५१।

[3]साहित्यदर्पणः, पत्राङ्कः – २२३।

**स्नेहरसः**

स्नेहरसोऽपि अतिरिक्तरसत्वेन प्रतिपादितः। अत्र आर्द्रता स्थायिभावो भवति, आर्द्रता मैत्रीभावः। वत्सलरसो मातृपुत्रयोः मध्ये गुरुशिष्ययोर्मध्ये वा दृश्यते, स्नेहरसः प्रधनतो मित्रयोर्मध्ये प्रतीयते। परन्तु अभिनवभारत्यामस्य पृथग्रसत्वं निराकृतम्। रतौ अथवा उत्साहादावस्य अन्तर्भावो व्याख्यातः[1]। यूनोर्मित्रयोर्यः स्नेहस्तस्य मित्रजनविषयकरतौ अन्तर्भावः, मातापित्रादौ बालस्य यः स्नेहस्तस्य भये विश्रान्तिः। लक्ष्मणादौ भ्रातरि विद्यमानस्य स्नेहस्य धर्मे अन्तर्भावः, एवं वृद्धस्य पुत्रादीन् प्रति यः स्नेहः सोऽपि अन्तर्भावितो दृश्यते। अतः स्नेहस्य न रसान्तरत्वम्।

**लौल्यरसः**

गन्धस्थायिकस्य लौल्यरसस्यापि वस्तुतोऽस्तित्वं नास्ति। अत्र गन्धो वासना, एतत्स्थायिकस्य लौल्यरसस्य हासे रतौ वा पर्यवसानं सम्भवति। अतो नास्य अतिरिक्तरसत्वम्।

**कार्पण्यरसः**

कार्पण्यरस इति केचन वर्णयन्ति, कृपणस्य भावः कार्पण्यम्। कृपणो वस्तुतो मूढः, कार्पण्यं मूढता। एवञ्च अयमपि हास्यरसेऽन्तर्भावितः। अनेन प्रकारेण रसानां नवविधत्वं प्रतिपादितम्, ततश्च नवैव रसा इति सिद्धान्तः।

**विमर्शः**

१.भक्तिरसस्य रतिभावे अन्तर्भावः सिद्धान्तितः। तत्र रतित्वाविशेषात् कामिन्यादिविषयायामपि रतौ भावत्वव्यपदेशोऽस्तु, अथवा विनिगमनाविरहात् भगवद्भक्तेरेव स्थायित्वम्, कामिन्यादिविषयकरतीनां च भावत्वमस्त्विति चेदुच्यते - नैतत् सम्भवति, रसभावत्वादिव्यवस्थायां भरतादिमुनिवचनानामेव प्रामाण्यात्। कामिन्यादि-विषयकरतेः रसत्वं व्यवस्थितम्, अत्र भावत्वव्यवहारे मुनिवचनविरोधः। किञ्च भक्तेरपि रसत्वप्रतिपत्तौ मुनिशासनातिक्रमेण रसानां नवत्वाधिककल्पने मानाभावः। अथ भक्ति-

---

[1]नाट्यशास्त्रम्, पत्राङ्कः – २३१।

शृङ्गारयोः महान् भेद इति मतं भ्रान्तम् – शृङ्गारस्थायिभावभूता रतिः विविधा सम्भवति। स्त्रीपुरुषविषयकरतिर्यदा भवति तदा शृङ्गाररस इति व्यवहारः। यदा भगवद्भक्त-विषयकरतिस्तदा भक्तिरस इत्याक्षिप्यते, यद्यपि तदवस्थायामपि शृङ्गार इत्येवोचितम्, परन्तु तदा रतिः भावत्वमाप्नोति अप्राप्तरसावस्था च भवति। एवं व्यभिचारभावभूतो रतिभाव एव भक्तिः।

२.भक्तिरसस्य शान्ते अन्तर्भाव इति प्रतिपादितम्। तत्र शान्तरसस्य स्थायिभावो निर्वेदो वैराग्यं वा, भक्तौ तु अनुरागः सञ्चारिभावः। एवञ्च अनुरागस्य वैराग्यविरुद्धत्वात् शान्तरसेऽस्य भक्तिरसस्य अन्तर्भावो न युक्त इति केचन प्रतिपादयन्ति, तदसत्, भक्तिशान्तयोः भेदाभावात्। भक्तौ रतयः भगवदभिमुखिन्यः, शान्तेऽपि रतयो भवन्ति, किञ्च ता भगवन्मात्राभिमुखिन्यः। एवं शृङ्गारेऽपि रतयो भवन्ति, ताश्च लौकिकवस्त्वभिमुखिन्यो भवन्ति, शान्ते रतीनां दिशः परिवर्तनं केवलं जायते, तच्च शमेन सङ्घटते। अत्रायं शम एव वैराग्यम्। एवं पारमार्थिकदृष्ट्या भक्तेः मोक्षोपयोगित्वाच्छान्त एवान्तर्भाव उचितः।

३. साहित्यदर्पणे विश्वनाथाचार्येण वस्तुतो नाट्यशास्त्रोक्तं मतमनुसृत्यैव प्रतिपादनं कृतम्। अत एव वत्सलरसप्रस्तावनासरे कथयति –"अथ मुनीन्द्रसम्मतो वत्सलः[1]" इति। अतो वत्सलरसस्य वास्तविकी सिद्धिः विश्वनाथस्य मतेऽपि न सम्भवतीति ध्येयम्।

४. मार्गान्तरेण रसो द्विविधः प्रकृतिभूतो विकृतिभूतश्च। प्रकृतिभूतो रसः शान्त एक एव, तत्र निमित्तभेदे सति तत्तद्भेदाः विकृतिभूताः शृङ्गारादयो रसाः प्रजायन्ते। अत उक्तंनाट्यशास्त्रे–

"स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते[2]॥" इति।

**उपसंहारः**

---

[1]साहित्यदर्पणः, पत्राङ्कः –२२३।

[2]नाट्यशास्त्रम् –०६.३२९।

संस्कृतालङ्कारशास्त्रे रसा नवेत्येव प्रसिद्धिः। सम्प्रदायभेदेन क्वचित् नूतनरसः प्रतिपादितो दृश्यते। तत्सर्वमपि मुनिमतम् अविरुध्यैव विवक्षितं भवति। अतो नव रसा इत्येव परमसिद्धान्तः। अत एव रसगङ्गाधरे पण्डितराजो जगन्नाथो भक्तेः पृथग्रसत्वं प्रतिपादयन्नपि तस्य सिद्धान्तितत्वं निराकृतवान्। तत्र अतिरिक्तरसत्वस्वीकारे भरतमुनिप्रतिपादितं रसानां नवसङ्ख्याकत्वं विरुध्येत इत्येवाशयः प्रतिपादितः। एवं नानामतविरोधे सत्यपि रसानां नवसङ्ख्याकत्वमित्येव सिद्धान्तः स्वीकरणीय इति बोद्धव्यम्। एवं संस्कृतालङ्कारशास्त्रे रसानां सङ्ख्याविषये यथासामर्थ्यं विचारः प्रस्तुतस्तत्र युक्तत्वायुक्तत्वे विद्वांस एव प्रमाणमितिमात्रं विनिवेद्य अत्रैव विरम्यत इति शम्।

**परिशीलितग्रन्थसूची**

1. आनन्दवर्धनः।ध्वन्यालोकः। वाराणसी : चौखम्भा संस्कृत संस्थान, २०६५ विक्रमसंवत्।
2. जगन्नाथः।रसगङ्गाधरः (पण्डित-श्रीबदरीनाथझाकृत-चन्द्रिकासंस्कृतव्याख्यया पण्डित-मदनमोहनझाकृत-हिन्दीव्याख्यया च सहितः)। वाराणसी : चौखम्बा-विद्याभवन, २००५।
3. नारदभक्तिसूत्रम् (स्वामिहर्षानन्दपुरीकृत-भक्तिकौमुदीव्याख्यासहितं डॉ. एम्. इ. रङ्गाचार्यकृतानुवादेन सहितञ्च)।वेङ्गलुरु : रामकृष्णमठः, २००३।
4. भरतमुनिः।नाट्यशास्त्रम् (एकादशाध्यायान्तो द्वितीयो भागः, श्रीमदभिनवगुप्तकृतया अभिनवभारतीव्याख्यया डॉ. पारसनाथद्विवेदिकृतया मनोरमा-हिन्दीव्याख्यया च विभूषितम्)। सम्पा. डॉ.पारसनाथद्विवेदी।वाराणसी : सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, १९९६।
5. मम्मटः।काव्यप्रकाशः (झळकीकरोपनाम्ना भट्टवामनाचार्येण विरचितया बालबोधिन्याख्यटीकया समन्वितः)। सम्पा. रामचन्द्र-नारायण-दाण्डेकरः।पुणे : भाण्डारकर-प्राच्यविद्या-संशोधन-मन्दिरम्, १९८३।

6. मिश्रः, वाचस्पतिः।साङ्ख्यतत्त्वकौमुदी (कृष्णा-संस्कृत-हिन्दीव्याख्याद्वयोपेता)।वाराणसी : चौखम्भा सुरभारती प्रकाशन, २०१२।
7. रूपगोस्वामी।श्रीश्रीभक्तिरसामृतसिन्धुः। सम्पा. डॉ. कपिला वात्स्यायन, प्रो० प्रेमलता शर्मा। इन्दिरा-गांधी-राष्ट्रीय-कला-केन्द्र।वाराणसी : मोतीलाल बनारसीदास पब्लिशर्स प्राइवेट लिमिटेड, १९९८।
8. विश्वनाथकविराजः।साहित्यदर्पणः (आचार्यकृष्णमोहनशास्त्रिकृतया लक्ष्मीव्याख्यया टिप्पण्या च विभूषितः)।वाराणसी : चौखम्भा संस्कृत संस्थान, २०६८ विक्रमसंवत्।
9. शाण्डिल्यभक्तिसूत्रम् (श्रीनारायणतीर्थविरचितया भक्तिचन्द्रिकया समन्वितम्)। सम्पा. आचार्य-श्रीबलदेव-उपाध्यायः।वाराणसी : सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, १९९८।
10. श्रीमद्भगवद्गीता (शाङ्करभाष्यसहिता, स्वामिवासुदेवानन्दकृतव्याख्यया अनुवादेन च सहिता)।कोलकाता : उद्बोधन-कार्यालय, १९६८।
11. श्रीहेमचन्द्रसूरिः।काव्यानुशासनम् (श्रीविजयलावण्यसूरिविरचित-प्रकाशवृत्तिसहितम्, प्रथमाध्यायात्मकः प्रथमभागः)। सम्पा. पन्न्यासश्रीसुशीलविजयो मणिः।सौराष्ट्रः श्रीविजयलावण्यसूरीश्वरज्ञानमन्दिरम्, २०१२ विक्रमसंवत्।

# आगमानन्दस्वामिनः धर्मविचारः

**अश्वती**

शोधछात्रा, वेदान्तविभागः,

एस्.एस्.यु.एस्, कालटि

भारतदेशः प्राचीनकालत एव संस्कृत्या निखिलस्यापि विश्वस्य श्रद्धाकेन्द्रम् आसीत्। भारते लब्धजन्म धर्मसङ्कलपः समस्तस्यापि विश्वस्य दीपायमानो बभूव। धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु धर्मः प्रथमस्थाने वर्तते। धृङ् धारणे इति धातोः मन् प्रत्यययोगे निष्पन्नः धर्म शब्दः। धारयति इति धर्मः। तथा यानि मूल्यानि मानवजीवनं श्रेष्ठं नयन्ति तेषां समाहारः धर्मः इति उच्यते। लौकिकजीवने धर्मः- व्यक्तिधर्मः, परिवारिकधर्मः. समाजधर्मः, राष्ट्रधर्मः, मानवधर्मः चेति पञ्चधा सन्ति।

भारतसंस्कृत्याः आधारभूतेषु ग्रन्थेषु वेदेषु महाभारतादीतिहासग्रन्थेषु मन्वादिषु स्मृतिग्रन्थेषु दार्शनिकग्रन्थेषु च धर्मस्य प्राधान्यं प्रदर्शितमस्ति। दार्शनिकाचार्यैः कणाद-जैमिनि-शङ्कराचार्यप्रभृतिभिः, आधुनिकैः विवेकानन्दागमानन्दस्वामिप्रभृतिभिश्च धर्मस्य प्राधान्यं समदुद्धुष्टम्। आधुनिकयुगे धर्मस्य प्राधान्यकल्पनायां प्रमुखं स्थानमावहन्ति श्री आगमानन्दस्वामिपादाः।

सः कालटि श्रीरामकृष्णाद्वैताश्रमस्य स्थापकः भारतीयसंस्कृतेः प्रचारकश्चासीत्। एवं केरलस्य नवोत्थाननायकरूपेण च प्रसिद्धः भवति। सः जीवने धर्माचरणं कथं करणीयम् इति स्वजीवितचर्यया एव लोकान् उद्बोधयति स्म। तदर्थं तैः बहूनि प्रभाषणानि कृतानि बहवः ग्रन्थाश्च विरचिताः। यद्यदेतैरुपदिष्टं तत्तत्स्वजीवने प्रयोक्तुञ्चैते बद्धश्रद्धाः आसन्।

स्वामिपादैर्विरचितेषु ग्रन्थेषु विशिष्टः 'धर्मः' इतिख्यातः। ग्रन्थे प्रतिपादितंधर्मविचारमधिकृत्य अस्मिन् लेखनेअध्ययनं क्रियते। स्वजिवनचर्यायांकथम् आगमानन्दस्वामिनः धर्माचारनिष्ठायां सुप्रतिष्ठितः अभवदिति विचार्य आधुनिकसमाजे तस्य धर्मसङ्कल्पस्य कियत्स्थानमस्तीति चेहाधीयते।

सर्वे मानवाः सामान्यतया समाजे शान्तिपूर्णं व्यवहारं चिकीर्षति। किन्तु अद्य आधुनिकयुगे मानवानां चित्ते असत्यं , द्वेषं , इर्ष्या ,हिंसा इत्याद्याः अनर्थवृत्तयः दृश्यन्ते। यदि मानवाः धर्मस्य मार्गेण जिवनं यापयन्ति तर्हि समाजः सुष्ठु प्रचलिष्यति। धर्मः वस्तृतस्तु मूल्यानि एव।येषां मूल्यानम् आचरणेन व्यक्तेः उन्नमनं तद्वारा विश्वस्य उन्नमनं च सम्भवति तदेव धर्मः। धर्मशब्दः प्रथमतया ऋग्वेदे एव दृश्यते। तत्र धर्मशब्दः विधिः, आचारः, व्रतम् इत्येतेषु अर्थेषु प्रयुज्यते। धर्मस्य मूलं वेद एव। वेदेषु समुत्पन्नः धर्मसङ्कल्पः उपनिषत्सु पुराणेषु तदनन्तरकालीनेषु कृतिषु च विकासं प्राप। आचरणदृष्ट्या धर्मः बहुभिः बहुधा विभक्ता सान्ति। तत्रव्यक्तिधर्मः,परिवारिकधर्म, समाजधर्म, राष्ट्रधर्म इति पञ्चधा विभाग एव प्रसिध्दः।

व्यक्तेः आध्यात्मिकतायाः भैतिकतायाः च उन्नमनाय यदाचर्यते तदेव व्यक्तिधर्मः।दम-आर्जव-अहिंसा-अक्रोध-सत्य-ब्रह्मचर्य-सन्तोष-त्याग-अपरिग्रह-मार्दव-दया-शान्ति-क्षमा-शौच-अद्रोहादयः व्यक्तिधर्मे अन्तर्भूतानि धर्माण सन्ति। व्याक्तिः कुटुम्बं जनयति ,कुटुम्बस्य उन्नमनार्थं येषां मुल्यानाम्आचरणं क्रियते तदेव परिवारिकधर्मः। त्यागः, आदरः च परिवारिकधर्मस्य आधारः। “मातृ देवो भव ,पितृ देवो भव”[1] इत्याद्याः श्रुतयः अत्र प्रमाणम्। कुटुम्बं समाजं जनयति। समाजधर्मस्तु समाजस्य उन्नमनार्थम्आचरितानि मूल्यानि एव। अहिंसा, सत्यं, आस्तेयं, अप्रिय सत्यस्य अभाषणं, कोपनियन्त्रणं, अतिथिसत्कारः च समाजधर्मे अन्तर्भूतानि मूल्यानि भवन्ति। समाजः राष्ट्रं जनयति। राष्ट्रस्य उन्नमनार्थं जनाः येषां मूल्याणाम् आचरणं कुर्वन्ति तदेव राष्ट्रधर्मः। यदि जनाः न वर्तन्ते,तर्हि राष्ट्रं न वर्तते। अतः जनैः मूल्याधिष्ठितं व्यवहाराचरणम् अवश्यं करणीयम्। अयं व्यवहारः मानवधर्मे अन्तर्भवति। अत्र प्रदर्शिताः पञ्च धर्माः परस्पराश्रयत्वेन एव वर्तत इति वक्तुं शक्यते।

इतिहासपुराणेषु प्रतिपादितो धर्म एव आगमानन्दस्वामिभिः सरलतया लौकिकोदाहरणसहितं स्वस्य ‘धर्मः’इति ग्रन्थे प्रदर्शितः। तपः- अहिंसा-सत्य- आस्तेय-

---

[1]तैत्तिरियोपनिषद् शिक्षावल्लि(1-11-2)

 ISSN : 2277-2359

ब्रह्मचर्य-अपरिग्रहः-आत्मसंयमनं- निस्वार्थता चेत्यादयःस्वामिनः धर्म इति कल्पयन्ति। स धर्मः तु पितृधर्मः, पुत्रधर्मः, भार्याधर्मः, भर्तृधर्मः,गुरुधर्मः, शिष्यधर्मः, राजधर्मः, प्रजाधर्मः, आश्रमधर्माः इत्येवं नानाविधाः सन्ति।"एते खलु धर्माः सम्यगनुष्ठिताः लोकशान्तये कल्पन्ते। प्रवर्धेत च राष्ट्रे क्षेमः।[1]"

न केवलं मानवानां अपि तु सकलप्राणिनां श्रेयः धर्मेणैव सम्भवति। अशनापिपासादीनां सर्वेषां दुःखानां समाधानं धर्मानुष्ठानेन लभते। यद्यपि क्वचिदेताद्दशानां समस्यानां समाधानं अधर्मेणापि सम्भवति तथापि तस्य स्थिरप्रतिष्ठा न सम्भवति। स्वामिनां अभिप्राये"यः मनुष्यस्य पारलौकिकजीविताविरोधी सन् अनन्तरप्रत्याघातवर्जमैहिकं श्रेयः विदधाति" स एव धर्मः। स धर्मः प्रत्यक्षादिना प्रमाणेन निर्णीतुं न शक्यते, तस्य प्रमाणं वेद एव भवति। "वेदोऽखिलो धर्ममूलम्" इतिमनुस्मृतिः। धर्माधर्मयोः प्रमाणं वेद इत्युच्यते चेत् इतरमतग्रन्थेषु प्रतिपाद्यमानं धर्मः न वा? इतिसंशये स्वामिनः समाधानम् एवं भवति-"धर्मान् देशकालानुसारेण तत्तदधिकारिविशेषानुद्धिष्य तत्देशवासिनः ते ते आचार्याः स्वमतानुसारेण यदा तद्देशवासिनं प्रजानामुपदिशन् तदा तत् मतभेदस्य तदनुसारीनानाग्रन्थजातस्य चावकाशप्रदमासीत्"[2]

आधुनिकसमाजे सर्वे जनाः अधिकं धनम् इच्छन्ति। धनसम्पादनार्थं ते हिंसा, असत्यभाषणम् इत्यादि अधर्ममार्गेणापि सञ्चरन्ति। एवं प्राप्तं धनं भोगाय कामाय च उपयुज्यन्ति। तस्य फलत्वेन लोके मानवः अन्योन्यकलहेषु निमग्नाः भवन्ति, अनेन लोके शान्तिः विनश्यति। अतः विश्वशान्तेः परिपालनार्थं धर्मस्य पुनःसंस्थापनम् अवश्यं कर्तव्यम्। तपः, अहिंसा, सत्य,आस्तेय, ब्रह्मचर्य, अपरिग्रह, आत्मसंयमन, निस्वार्थादयः धर्मे अन्तर्भूताः सन्ति।

शारीरमानसवाचिक भेदेन तपः त्रिविधो भवति। देवद्विजगुरुप्राज्ञपूजनं शौचं, आर्जवं, ब्रह्मचर्यं, अहिंसा च शारीरं तपः। मनःप्रसादः, सौम्यता, स्थैर्यं, आत्मविनिग्रहः,

---

[1]धर्मः(पृष्ठसंख्या-40)

[2]धर्मः(पृष्ठसंख्या-11)

 ISSN : 2277-2359

भवसंशुध्दिः च मानसं तपः। इन्द्रयनिग्रहः आहारनियन्त्रणं ब्रह्मचर्यं च तपसः मुख्यलक्ष्यभूताः।

अद्य जनानाम् अनारोग्यस्य मुख्यकारणं तेषाम् आरोग्यशीलमेव। आहारनियन्त्रणेन जनानाम् आरोग्यपरिपालनं दुर्भिक्षनिरोधश्च कर्तुं शक्येते। ब्रह्मचर्येण जनानां त्यागशीलता, क्लेशसहिष्णुता, कामक्रोधलोभमोहादीनामुपरि नियन्त्रणशीलं च वर्धन्ते। अद्यबहूनि विवाहमोचनानि सम्भवन्ति। तेषां मुख्यकारणं क्रोधहर्षादीनां नियन्त्रणाभाव एव। यदि ब्रह्मचर्येण आत्मसंयमनं प्राप्तः तदनन्तरं गृहस्थाश्रमे प्रविशति चेत् तस्य कुटुम्बे अभिवृध्दिः समाधानं अनेनसमाजस्य उन्नतिः च सम्भवति। ब्रह्मचर्यं अनुष्ठीयमानानां व्यक्तीनां ओजः,वीर्यं, आयुः, मनोधैर्यं च वर्धयति। "एकस्य किल ब्रह्मचारिणः तद्रहितानां चतुर्णांपुरुषाणां बलं स्यात्"[1]। इति।

गृहस्थधर्मे तावत् अतिथिपूजा, अमिताहारपरित्यागः, विवाहानान्तरं एकद्विपुत्रोत्पत्तौ अनन्तरं ब्रह्मचर्यं च गृहस्थधर्मे अन्तर्भवति। अविचारितागतः पथिकः , ब्रह्मचारी, संन्यासी च भवति अतिथिः न तु अन्यः। अमिताहारपरित्यागेन राष्ट्रे दुर्भिक्षं न जायेत। ब्रह्मचर्यानुष्ठानेन जनसंख्याभिवृद्धिः निरोद्धुं शक्नुमः।

एवं गुरुधर्मः अस्ति। अध्यापकानाम् अध्यापनवृत्तिः शिष्यानाम् उन्नतिम् उद्दिष्टा भवेत् न तु धनसम्पादनार्थं।विद्याभ्यासस्य उद्येश्यं विद्यार्थिनां व्यक्तित्वविकास एव भवेत्। "अध्यापकः न विद्या वाणिज्याय प्रयतेरन्"[2]। एवं छात्राणां धर्म एव ब्रह्मचर्यं सम्यग्रूपेणाध्ययनं च। यदि विद्यर्थिनः केवलं कलाशालासु उल्लासे कलहेषु च निमग्नाः तर्हि राष्ट्रस्य गतिः कथं भवति ? एवं वैद्यवराः, न्यायाधिपाः, कर्मकराः सर्वे अपि धर्मनिरताः भवेयुः।

राष्ट्रे विद्यमानानां दुर्भिक्षदौर्मनस्यसांपत्तिकासमत्वसैन्यसंनहनराष्ट्रक्षोभादीनां विविधानां समस्यानां समाधानं धर्मानष्ठानेन लभ्यते। एते प्रश्नाः मनुष्यादेव सम्भूताः

---

[1]धर्मः (पृष्ठसंख्या-32)

[2]धर्मः (पृष्ठसंख्या-44)

“मनुष्यस्य मनसो जातमेतदखिलं”[1]। अतः एतेषां परिहाराय मनसः शुद्धीकरणमेव उत्तमोपायः। रागद्वेषाः मनसःदोषाः भवन्ति। यदि रागद्वेषयुक्ताः मनुजाः राष्ट्रस्य भरणं कुर्वन्ति तर्हि तत् भरणमपि रागद्वेषयुक्तं भवति। अतः रागद्वेषनिरोधनेन मनसः शुद्धिरेव आधुनिकसमाजे जनानां अत्यावश्यकम्।“तथा ‘धनं त्यागाय’अथवा ‘यज्ञाय कल्पितं’इत्येतदजानतां गृहस्थानां रागद्वेषवतामधिकारसत्वे भवति सांपत्तिकासमत्वं, प्रदुर्भवति च राष्ट्रे दुर्भिक्षम्”[2]। अतः राष्ट्रतन्त्रमपि धर्माश्रितं भवति चेत् समस्तस्य विश्वस्य शान्तिं विधातुं शक्नुमः।

**आधुनिकसमाजे धर्माचरणं।**

आधुनिकसमाजे शिक्षासंस्कृतिराष्ट्रीयादिषु समस्तमण्डलेषु धर्मस्य पुनः संस्थापनम् अवश्यं करणीयम्। धर्मानुष्ठानस्य प्रारम्भः व्यक्तेःबाल्यादेव करणीयः।विषयाभिनिवेश एव पुरुषाणाम् अशान्तेः मुख्यो हेतुः। तस्यतु विषयाभिनिवेशस्य हेतुत्वेन स्वार्थता अकारुण्यं लोभश्च भवन्ति। तेषां निरोधः ब्रह्मचर्याहिंसासत्यत्यागार्जवापरिग्रहादि धर्मानुष्ठानेन कर्तुं शक्यते। धनं तु सम्पादनीयमेव, किन्तु न केवलं आत्मसुखाय अपि तु परसुखायापीति बोद्धव्यम्। न केवलेन धनदानेन दीनाः रक्षितव्याः, किन्तु स्वयमेवावस्थातुं ते सज्जाः स्युः। अतस्सम्पादितानधिकेन धनेन दीनोद्धरणाय पर्याप्तानां कर्मणां सेवाप्रवृत्तीनां वा विकासः करणीयः।

पुत्रवात्सल्येनैव छात्राणां श्रेयः शिक्षकैः विधास्यः। शिक्षा न केवलं विषयज्ञानसम्पादनाय किन्तु विद्यार्थिनः व्यक्तित्वविकासायापि भवेत्। छात्राणां शारीरिकं मानसिकञ्चारोग्यं शिक्षामण्डले प्राधान्यमर्हन्ति। तदर्थं अहिंसा-सत्य-ब्रह्मचर्य-उत्तमाहारशीलादीनां प्राधान्यं तेषाम् अध्ययनभागेषु अन्तर्भाव्य तत्र अन्तर्भूतानां धर्माणां परिशीलनं च विद्यार्थिभ्यः प्रदेयम्। राष्ट्रस्य अखण्डता ऐक्यं च मया संरक्षणीयानि, स एव

[1]धर्मः(पृष्ठसंख्या-57)

[2] धर्मः(पृष्ठसंख्या-58)

 ISSN : 2277-2359

छात्रत्वेन स्वकीयः धर्म इति एकैकः छात्रः संबोद्धव्यः। अत एव शिक्षाकाल एव तैः समाजसेवावृत्तिषु भागभागित्वं देयम्। फलाकाङ्क्षां विनैव तादृश कर्मसु ते सज्जाः स्युः।

तद्दशैः छात्रैरेव विधतं राष्ट्रतन्त्रं धर्माधिष्ठितं भवेत्। राष्ट्रतन्त्रज्ञः कामक्रोधलोभमोहादिरहितः लौकिकसुखेषु विरक्तश्च भवेत्। ते राष्ट्रीयादृते समभावनासम्पन्नाः स्युः। राष्ट्रतन्त्रज्ञानां प्रवृत्तिः राष्ट्रस्य क्षेमाय भवेत्, न स्वकीयसंस्थायाः। एकत्र समाहृतं धनं अन्येषां दुर्भिक्षहेतुः भवति चेत् तादृश साम्पत्तिकावस्थितिः न राष्ट्रस्य गुणकरं स्यात्। जनसेवनमेवराष्ट्रतन्त्रज्ञस्य धर्मः। पौरधर्माणामवबोधने ते प्रवीणाः भवेयुः।

धर्मः आशास्यानां विशिष्टगुणानां सञ्चिका वर्तते। धर्मे सति न्याये गुण अन्वेष्टव्याः। यथाकालं यथावस्तु यथायुक्ति सर्वजनसुखाय सर्वजनहिताय च यद्यद् भाव्यं तत्तत्सर्वं धर्मेण सम्भवेत्। अत एव धर्मावबोधस्य प्रचारकाल अतिक्रान्त एव।

<u>सहायकग्रन्थानुक्रमणि।</u>

1. श्री आगमानन्दस्वामिः, धर्मः, श्रीरामकृष्ण अद्वैताश्रमः कालटि, 1955.
2. श्री आगमानन्दस्वामिः, वीरवाणि प्रथमः भागः, श्रीरामकृष्ण अद्वैताश्रमः कालटि, 1956.
3. तैत्तिरीयोपनिषद्, गीताप्रेस्, गोरखपुर्,2011.
4. भाष्यकारः-डा.सुरेन्द्रकुमार्, मनुस्मृति, आर्षसाहित्य प्रचार ट्रस्ट, दिल्ली.

# सैरन्ध्रीनाटके सामूहिकसमस्याः

**मोनिका . एम्**

शोधच्छात्रा, सामान्यसंस्कृतविभागः

श्रीशङ्कराचार्य संस्कृतसर्वकलाशाला, कालटि

**कुञ्चिकापदानि**

पाण्डवानां अज्ञातवासः, कीचकस्य क्रूरता, दास्यादीनां क्लेशः, अबलानां व्यथाः, नारीणां दुरवस्थाः।

**शोधसारः**

सैरन्ध्रीनाटकं गोस्वामिबलभद्रप्रसादशास्त्रिणा विरचितम् आधुनिकसाहित्यं वर्तते। महाभारते पाण्डवानां विराटपर्वकालीनं अज्ञातवासजीवनं नवसु अङ्केषु चित्रितम् अत्र। स्त्रीप्रधानयुक्ते अस्मिन् नाटके मुख्यनायिका तु द्रौपदी एव। अज्ञातवासजीवनस्य द्रौपद्याः समग्रकष्टानां विवरणेन कविना समाजिकजीवने स्त्रीणाम् कष्टताः व्यथाः मानसिकसंघर्षाः च अत्र प्रस्तूयते। अनेन प्रबन्धेन मया सैरन्ध्रीनाटके वर्णितानां सामूहिकविषयाणां चर्चा क्रियते।

**सैरन्ध्रीनाटकस्य सामान्यः परिचयः।**

सैरन्ध्रीनाटकस्य इतिवृत्तं महाभारतस्य विराटपर्वात् स्वीकृतं भवति। कौरवैः सह द्यूतक्रीडायां पराजितश्चेत् युधिष्ठिरः स्वपत्न्या द्रौपद्या सोदरैः भीमार्जुननकुलसहदेवैः च साकं द्वादशवर्षपर्यन्तं वनवासम् एकवर्षकालम् अज्ञातवासं च आचरेत् इत्यासीन्नियमः। युधिष्ठिरश्च पराजितः, अतः तं नियमं पालितवान्। अन्ततः एकवर्षं यावत् अज्ञातवासकाले किं किं समजायात इति चित्रीकरोति सैरन्ध्री नाम नाटकमिदम्। सैरन्ध्री इति अज्ञातवासकाले पाञ्चाल्या द्रौपद्या स्वीकृतं नाम भवति। तन्निष्ठितं च नाटकं सैरन्ध्री नाम नाटकम्। नाटके बहूनि कथापात्राणि सन्ति। पञ्चविंशतिः कथापात्राणि। तत्र अष्ट नारीपात्राणि, सप्तदश पुरुषपात्राणि च।

एतन्नाटकं स्त्रीप्रधानं भवति। द्रौपदी अत्र मुख्यकथापात्रम्। तां केन्द्रीकृत्य कथा प्रचलति। पूर्वं दुर्योधनदुश्शासनाभ्यां सर्वेषां पुरतः कौरवसभायाम् अर्धनग्नीकृतायाः दुःसहापमानमनुभवत्याः द्रौपद्याः अन्तर्निहितक्रोधदुःखप्रतीकारदाहादिभावा अस्मिन्नाटके चित्रिताः। वनवासकालावसानदिनादारभ्य उत्तराभिमन्व्वोः परिणयपर्यन्तं या कथा, सा अत्र नवसु अङ्केषु चित्रीक्रियते। पाण्डवपट्टमहिषी द्रौपदी, विराटराज्ञः सुदेष्णायाः सैरन्ध्री इति नाम्ना दासीभावं स्वीकृत्य स्वकीयायाः उन्नतस्वभावादिगुणैः पट्टदासी अभवत्। कीचकेनोत्पादितः क्लेशः, तदनु कीचकवधः, कौरव-मत्स्यराजयुद्धे बृहन्नलारूपधारिणो अर्जुनस्य सामर्थ्येन विराटराज्यविजयः, अज्ञातवासावसानम्, उत्तराभिमन्व्वोः विवाहः च अस्मिन् नाटके क्रमशः चित्रीकरोति।

**नाटके सामूहिकसमस्याः**

नाटककारेण सैरन्ध्रीनाटके केवलम् इतिहासकथाकथनमेव न कृतम्, प्रत्युत सामूहकसमस्याः च प्रदर्शितास्तेन। समूहे प्रवर्तितानि स्त्रीणां दुरितानि विशेषतः प्रतिपादयति सः। महाभारते उक्तिः अस्ति- "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्" इति। महाभारते स्त्रीभिः अभिमुखीकृता ये क्लेशाः अवमानना कष्टानि वा तानि सर्वाणि कविः अधुनिकसमूहस्थसमस्यानां पृष्ठभूमौ अवतारयति सैरन्ध्रीनाटके। एतस्मै कारणाय कविः महाभारतकथातः काश्चन व्यत्यासा अत्र नाटके द्रष्टुं शक्यन्ते।द्रौपद्याः विराटराजस्य अन्तःपुरप्रवेशनप्रसङ्गः अपि कविना परिवर्तनविधेयः कृतः। महाभारते सुदेष्णा द्रौपद्याः सौन्दर्येण आशङ्किता – कदाचित् विराटः तस्याः सौन्दर्येण आकर्षित एव तस्याः राजभवनप्रवेशमनुमोदत इति।[1] पुनश्च, महाभारते पञ्च गन्धर्वाः द्रौपद्याः पतयः तस्या रक्षकाः भवन्ति। अत्र नाटके रक्षकाः एव, न तु पतयः। महाभारते कीचकः द्रौपदीं ताडयित्वा राजसभायां अपमानितां विदधाति। तत्समये तस्याः साहाय्यार्थं कोऽपि नागच्छति। कङ्कः तां शासयित्वा अन्तःपुरगमनाय आदिशति।[2] कीचकस्य क्रूरतां राजा

---

[1].മഹാഭാരതസർവസ്വം(1-ാം ഭാഗം), p.385

[2]. Ibid p.392

 ISSN : 2277-2359

अपि दृष्ट्वा मौनमेव स्वीकृतवान्। अस्मिन् नाटके सुदेष्णा सैरन्ध्र्याः साहाय्यार्थमागत्य कीचकम् अनुशासति। कीचकवधानन्तरं सर्वे सैरन्ध्रीं भयेन एव पश्यन्ति। सुदेष्णा अपि सैरन्ध्रीं प्रति कुपिता अभवत्, स्वभ्रातुः मरणकारणेन। एते विषयाः अत्र न प्रतिपादिताः। इत्यादिभिः व्यत्यासैः सहितं चित्रीकरणमत्र दृष्टुं शक्यते।

पञ्चवीरपुरुषभर्तृका अपि तेषां पुरतः कौरवराजसभायां द्रौपदी अवमानिता। द्रुपदराजपुत्री, स्वयं पट्टमहिषी च। एवं सकलसौभाग्ययुक्ता नारी सर्वेषां पुरतः अवमानिता। एवं सति समूहे साधारणनारीजनानाम् अबलानां च अवस्था कथं सुखकरं भविष्यति इति चिन्ता प्रथमाङ्के प्रकट्यते। द्वितीयाङ्के कविरधुनातनसामूहिकविषयान् द्रोपदीसुदेशष्णयोः सम्भाषणरीत्या अवतरति। "जीवनं चापि नार्याः कीदृग्विधं निर्मितं विधिना सा सुस्निग्धां पित्रोरनुरागच्छायां विहाय अज्ञातपुरुषहस्ते समर्पिता सर्वथाऽपरिचितगेहं प्रविशति........।" "सत्पुरुषा नार्याः सम्मानेन मिथः स्नेहेन सद्गृहस्थजीवनं जीवन्ति। परं ये धूर्ताः क्रूराः तेषां कृते मदीयमेतदुद्बोधनम्..." इत्यादिना तयोः सम्भाषणेन नारीणां जीवितमधिकृत्य स्पष्टचित्रणं कृतम्। भर्तृगृहे पीडाम् अनुभूय बह्व्यः स्त्रियः वसन्ति। यौतककारणेन वा अन्यकारणेन वा। "पुरुषोऽप्येषोऽर्धनारीश्वरः। नारीं बिना कीदृङ्गमस्यापूर्णं पौरुषम्।" इति स्त्रीपुरुषसमत्वं नाटके प्रतिपादयति कविः। तृतीयपञ्चमषष्ठाङ्केषु दास्यादीनां क्लेशः प्रतिपाद्यते। तृतीयाङ्कस्य आरम्भे कीचकसान्निध्येन अन्तःपुरदासीनां सौन्दर्यं तासां निर्भाग्यम् इति प्रवेशके कथ्यते। कीचकः राज्ञाः सुदेष्णायाः सोदरः विराटदेशबलाध्यक्षः, अतीव शक्तिशाली क्रूरः कामुकश्च। तेन दासी सैरन्ध्री बहुक्लेशान् अनुभाविता। सः सैरन्ध्र्याः अनुमतिं विना अनिष्टदृष्टिं पातयति तस्याम् बलात् तस्याः हस्तं गृह्णाति, आलिङ्गनाय परिश्रमं करोति तां पादेन ताडयति च।[1] अत्र यजमानस्य क्रौर्येण दासादयः यां पीडामनुभवन्ति तामक्ष्णोः पुरतः स्थापयति ग्रन्थकृत्। आत्मनः पतयः अपि दासरूपेण स्थिता इति कारणेन प्रत्यक्षम् किमपि कर्तुम् अशक्ता सैरन्ध्री, तत्सदृश्यःअन्याश्च नार्यः। कीचकपीडनया राजसभायाम् आगताम् सैरन्ध्रीं राजा

[1]सैरन्ध्रीनाटकम्, अङ्कः ६.

ISSN : 2277-2359

अपि न श्रुणोति। "दास्याः स्वभावविपरीतं सभामध्ये बहु वाग्वैदग्ध्यप्रदर्शनमनावश्यकम्। सभासत्सु दोषारोपणं नोचितम्। ......" इत्यासीद् विराटस्य सैरन्ध्रीं प्रति वचनमम्।[1] अत्र दाससीनाम् अवगणना द्रष्टुं शक्यते। सुदेष्णया राज्ञः उक्तविषयस्य प्रत्युत्तरं दत्तम्, "...तथैव नेयं दासी, महनीया नारी।" इति॥

इदानींतनकाले अपि अबला नारी न सुरक्षिता भवति। कविः तद्विषयं स्वनाटके अवतारयति। स्वकर्मणि कार्यालये कर्मस्थाने गृहे सर्वत्र बहूनि दुरितानि सोढुमेव निर्मिता नारी विधिना इतिवदाचरन्ति प्रायः सर्वे। अबला, अशरणा, दरिद्रा इत्यादितोपि सा नारी इति सुदेष्णायाः उक्तिः आधुनिककालिका भवति। समूहे अधोभागस्थजनानां विशेषतः अबलानां वचनेभ्यः कोऽपि प्राधान्यं न कल्पते। सैरन्ध्रीनाटके द्वितीयाङ्के सुदेष्णायाः उक्तिः भवति- "अनेन ज्ञायते, अबला यावत् स्वयं सबला न भविष्यति, पुरुषैः पद्दलिता विवशा स्वदुर्दशाया अरण्यरोदनमेव करिष्यति।" इति। एषा उक्तिः आधुनिकसन्दर्भे सकलनारीजनानाम् कृते उत्तमोपदेशः भवति। स्वरक्षा स्वयमेव करणीया।

**निगमनम्**

डॉ गोस्वामिबलभद्रप्रसादशास्त्रिमहाशयेन विरचितं सैरन्ध्रीनाटकम् स्त्रीप्रधानम् नाटकं भवति। महाभारतविराटपर्वकथायां द्रौपद्याः अवस्थामाधृत्य कथा प्रचलति। अग्नेः आगता, द्रुपदराजपुत्री, पाण्डवानां पट्टमहिषी द्रौपदी अज्ञातवासकाले विराटराजभवने दासीरूपेण यामसह्यपीडां मनोव्यथां च अनुभवति तामेव स्थितिविशेषां नाटकीयतया अत्र प्रदर्शयति ग्रन्थकारः। कविः एतैःऐतिहासिकविषयचित्रीकरणैः सह समकालीनविषयान् अपि चित्रीकरोति। तदर्थं कविः महाभारतकथासमेतम् कांश्चन कल्पितांशानपि योजयित्वा कथावस्तु अग्रे नयति। लोकेभ्यः चिन्तनाय आत्मनिरीक्षणाय परिशोधनाय च नैकाः सामूहिकसमस्या दुरवस्थाश्च प्रतिपाद्यन्ते नाटकसम्भाषणमध्ये इतस्ततः।

**ग्रन्थसूची**

**संस्कृतम्**

---

[1]ibid

१. महाभारतसर्वस्वम्, आचार्यः श्रीकुबेरनाथशुक्लः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, १९९६.

२. रूपकपञ्चकम्, डॉ गोस्वामिबलभद्रप्रसादशास्त्री, वाग्देवता प्रकाशन, बरेली, 2002.

३. सैरन्ध्रीनाटकम्, डॉ गोस्वामिबलभद्रप्रसादशास्त्री, नारायन प्रिण्टर्स, बरेली, २००५.

മലയാളം

1. മഹാഭാരതസർവസ്വം(1-ാം ഭാഗം), സ്വാമിജ്ഞാനാനന്ദസരസ്വതി, അനന്തകുടീരം, കന്യാകുമാരി, 1990(3rd Edition).
2. ശ്രീമഹാഭാരതം (രണ്ടാം വാള്യം), കോടുങ്ങല്ലൂർ കുഞ്ഞിക്കുട്ടൻ തമ്പുരാൻ(വിവർത്തനം), സുലഭ ബുക്ക്സ്, തൃശ്ശൂർ, 1995.